॥ श्रीः ॥

महाकविश्रीहर्षप्रणीतम्

# नैषधकाव्यरत्नम् ।

पदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्याय-
कोलाचलमल्लिनाथसूरिविरचित—
जीवातुसमाख्यव्याख्या
सहितम् ।

प्रथमसर्गादारभ्य सप्तमसर्गपर्यन्तम् ।

पाठकोपाभिधेन
श्रीगौरीनाथशर्म्मणा
संशोधितम् ।

तच्च

काशीस्थ-शारदा-भवनात्
समुल्लसितम् ।

वैक्रमाब्दाः १९९५ कर्क

# * निवेदना *

न खलु न विदितं विदितवेदितव्यानां सारस्वतसरोऽवगाहनक्षालितनिजाघलघूनां तत्त्वविदां विपश्चितां यन्महाकवि-कुलकमलदिवाकरायमाणस्य तत्रभवतः श्रीहर्षस्य लोकोत्तरा कृतिर्नैषधीयचरितमिदं महाकाव्यं पञ्चमहाकाव्येषु सर्वोत्कृष्टमासनमासादयतीति ।

इदं खलु नैषधमहाकाव्यं कालिदासादिकविकृतिविलक्षणं नारिकेलफलमिव बहिः कर्कशया शैल्या विरच्यमानमप्यन्तः सुधाधवलं सरसमधुरमव्युत्पन्नमतीनां सुकुमाराणां कुमाराणामत्यर्थमुद्वेजकं, सूक्तिसुधासरोऽवगाहनविलक्षणविचक्षणानां सहृदयधुरीणानां पुनः साहित्यिकानामतलस्पर्शं वेदान्तरसम्पर्ककलङ्कविकलमान्तरमामोदमनुभावयत् परिपक्वधियामेवावगाहनयोग्यतामत्र बोधयतीति नास्तीह संशीतिलवोऽपि ।

सर्वाङ्गीणप्रगुणगुणरमणीयेऽप्यस्मिन् प्रसादगुणविकले महाकाव्ये द्रागर्थप्रतीतिविरहादत्र वर्तमानमप्यलौकिकमस्य सौन्दर्यं याथार्थ्येन प्रकाशितं न भवति, तथापि पदे पदेऽयं महाकविः काव्यचारुत्वोपपत्तये गुणाभिव्यञ्जकान् शब्दार्थान्, शब्दार्थश्लेषानुप्रासप्रचुरानुपमोत्प्रेक्षाद्यलङ्कारान्, वैदर्भीबहुलां रीतिं, सम्भोगपर्यवसायिनं विप्रलम्भशृङ्गारमन्तरान्तरा करुणहास्यादिभिरितरैरङ्गरसैश्च परं परिपोषमापादयन् काव्यरसलोलुपानामानन्दं जनयत्येव ।

कविनानेन-अर्णववर्णनम्, विजयप्रशस्तिः, नवसाहसाङ्कचरितम्, ईश्वराभिसन्धिः, गौडोर्वीशकुलप्रशस्तिः, शिवशक्तिसिद्धिः, छन्दःप्रशस्तिः, स्थैर्यविचारणप्रकरणम्, खण्डनखण्डखाद्यम्,—इत्यादीन्यपि ग्रन्थान्तराणि प्रणीतानि ।

अत्र च केवलं खण्डनखण्डखाद्यमपहाय यत्र तत्र प्राक्तनहस्तलिपिपुस्तकालयेषु तालपत्रलिखिता द्वित्रा एव ग्रन्था उपलभ्यन्त इति श्रूयतेऽन्ये तु सर्गान्तिमश्लोकेष्वेव नामत उपलभ्यन्ते ।

सोऽयं श्री हीरनाम्नः पण्डितात् मामल्लदेव्यामुत्पन्नो महाकविः जयन्तचन्द्रस्य कान्यकुब्जेश्वरस्य सभापण्डित आसीदित्यधस्तन-श्लोकादेवात्रगम्यते—

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

अयञ्च जयन्तचन्द्रस्त्रिचत्वारिंशदधिकद्वादशशतविक्रमाद्वीयाषाढशुक्लसप्तम्यां रवौ वाराणस्यामङ्गणनाम्ने ब्राह्मणाय कञ्चन ग्रामं दत्तवानिति तदीयदानशासनादवगत्य महाकविरयं तदाश्रितत्वात्तदानीन्तन एवेति बाढमनुमातुं शक्यम् ।

एतद्धि सुप्रसिद्धं महाकाव्यं श्रीमन्महाभारतीयवनपर्वस्थसप्तविंशत्यध्यायोपवर्णितकथाभागमवलम्ब्य प्रणीतम् । अत्र च धीरोदात्तगुणान्वितो निषधाधीशः श्रीनलभूपतिर्नायकः । शृङ्गारश्चाङ्गी रसः, वीरप्रधानाश्चाङ्गभूता अन्ये रसाः । नायकेतिवृत्तमूलकञ्चास्य नाम ।

अस्य महाकाव्यस्य बहूनि व्याख्यानानि वर्तन्त इति श्रूयते परं नारायणीय-जीवातुव्याख्यानद्वयमन्तरेण नान्यन्मुद्रितमुपलभ्यते ।

नारायणीय व्याख्याने यद्वा यद्वेत्यादिना नारायणपण्डितेन स्वप्रतिभागोचरा बहवः पक्षाः प्रतिपादिता अपि कविविवक्षितार्थप्रतिपादने जीवातुव्याख्याता मल्लिनाथ इव मनागपि साफल्यमयं नालभतेति सुदृढं प्रतीमः ।

एतत्प्रणीतोऽयं जीवातुव्याख्यायुतः सप्तसर्गात्मको भागः शोधयित्वा पिपठिषूणां छात्राणामुपकारार्थं प्रकाशितो नूनं तेषां मुदमाधास्यति । मनुष्यजन्मसुलभदोषतया मतिमान्द्यादप्युर्वरितानवद्यान् क्षमासारा विद्वांसः स्वयमपोहन्त्विति—

विदुषां वशंवदो—गौरीनाथ पाठकः ।

❀ श्रीहरिः ❀

# नैषधीयचरितस्य कथाभागः ।

## अत्र कथासारस्तावत् प्रथमे सर्गे—

लावण्ये मन्मथोऽन्यो महसि च मिहिरः पावकश्चैव दीप्तौ
पुण्यश्लोको नलोऽभूद्विदितगुणगणो भीमपुत्र्यां स्पृहावान् ।
तत्त्वं निह्नोतुकामो वनमुपगतवान्काञ्चनं तत्र हंस-
मादायादावतोऽमुं सपदि सकरुणो दूयमानं मुवोच ॥ १ ॥

## द्वितीये सर्गे—

इन्द्रादावप्यरक्तां त्वयि निषधपते ! भीमजां गाढरागां
कर्त्तास्मीति प्रतिज्ञामनु स मनुजवाक्कुण्डिनं तूर्णमागात् ।
प्रासादस्योपकण्ठे विहरणविपिने सञ्चरन्ती यथेच्छं
मध्ये स्वालीसमाजं निरुपमसुषमां भामिनीं तां ददर्श ॥२॥

## तृतीये सर्गे—

दृष्ट्वा हैमं मरालं मधुरमनुययौ सैककाऽऽदातुकामा
तां चावादीत्स दूनां यदि मयि सरुचिर्भीमजे ! ब्रह्मवाहे ।
पुण्यश्लोकं दयालुं निषधपतिमुपास्स्वाशु वश्याः स्म तस्य
चेदेवम्मां तदीयां कुरु तदिति नलं सोऽभ्यधात्तद्वचश्च ॥३॥

### चतुर्थे सर्गे—

तस्मिन्सम्राजि कान्ते हरति गुणगणैर्मानसं माननीये
गाढं प्रेमाणमाप्ता मदनशितशरैरर्दिता दुर्बला सा
लेभे स्वास्थ्यं न जातु क्वचिदपि च मुहुर्मूर्च्छति स्मेति भीमः
श्रुत्वा ज्ञात्वा च तत्त्वं स्वदयितवृतये मार्गमाचष्ट कर्तुम् ॥४॥

### पञ्चमे सर्गे—

कन्या कान्तं वृणोति स्वयमभिलषितं यत्र चक्रे पदं तद्
भीमः श्रुत्वा सुरर्षेर्हरिरपि धरणीमाययौ सानलादिः
दूतो भूत्वा नल! त्वं व्रज, कथय गुणान् भाविनीं नश्च कर्तुं
कामं चेष्टस्व भैमीमिति स च सविधे हन्त तस्यान्ययुङ्क्त ॥५॥

### षष्ठे सर्गे—

तत्रत्यानामलक्ष्यः स समुपगतवान्भीमजां देवताना-
मैश्वर्यस्य प्रभावादकथयत गुणांस्तत्समक्षं च तांस्तान् ।
सावज्ञं सा निरास्थत्स्थिरहृदयतया नैषधे दौत्यवाचो
वैदर्भी तां च पश्यन् व्यथिततरमनाः सोऽप्यभूद्वैरसेनिः ॥६॥

### सप्तमे सर्गे—

स्वस्मिन् रागं प्रगाढं निजहृदयपदाधिष्ठिताया विदित्वा
प्रत्यङ्गं तां स्तुवानः परिहृतकपटो वैरसेनिर्बभूव ।
वैदर्भी चात्मकान्तं तमवगतवती विस्मिताभिः सखीभि-
र्दृग्भिः सम्पीयमानं किमिह बत भवानित्यपृच्छत्तथाऽपि ॥७॥

---

जीवातुसमाख्यव्याख्यासहितं

# नैषधकाव्यरत्नम्

## प्रथमः सर्गः ।

निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियन्ते न बुधास्सुधामपि ।
नलस्सितच्छत्रितकीर्तिमण्डलस्स राशिरासीन्महसां महोज्ज्वलः ॥

"इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥"

अथ तत्रभवान् श्रीहर्षकविः—'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयस्साधनतां काव्यालापांश्च वर्जयेदिति

---

महसां तेजसां राशिः सूर्य इव स्थित इति लुप्तोपमा, लुप्तोत्प्रेक्षावेति प्रकाशकारः । अस्मिञ्छ्लोकेऽनुप्रासालङ्कारः । सुधाकथयोरौपम्ये प्रतीते सति कथायाश्च सुधापेक्षयाधिक्यप्रतिपादनाद्व्यतिरेकोनामार्थालङ्कारोऽपि । एवं प्रस्तुताप्रस्तुतयोर्नलसूर्यवर्णनयोः श्लिष्टपदोपनिबन्धे श्लेषालङ्कारोऽपि । सूर्येण सह नलस्याभेदप्रतिपादनाद्रूपकम् । ततश्च तिलतण्डुलनयेनात्र सङ्कर इति विद्याधराशयः ॥ १ ॥

तन्निषेधस्यासत्काव्यविषयतां च पश्यन् नैषधाख्यं महाकाव्यं चिकीर्षुः चिकीर्षिताविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।" इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च कथानायकस्य राज्ञो नलस्य भूतिलक्षणं परममङ्गलं वस्तु निर्दिशति—**निपीयेति** ॥ क्षितिरक्षिणः क्ष्मापालस्य यस्य नलस्य कथा उपाख्यानानि, निपीय नितरामास्वाद्य । "पीडस्समासे क्त्वो ल्यप्" इति ल्यबादेशः । "नल्यपि" इतीत्वप्रतिषेधाभेत्त्वम् "बुधास्तज्ज्ञास्सुराश्च" । 'ज्ञातृ चान्द्र सुरा बुधाः' इति क्षीरस्वामी । सुधामपि तथा यथैतत्कथा इत्यर्थः । नाद्रियन्ते न रोचन्त इत्यर्थः । अमृतादतिरिच्यन्ते रसैस्तत्कथा इति भावः । सितच्छत्रं कृतं सितच्छत्रितं श्वेतातपत्रीकृतमित्यर्थः । "तत्करोति" इति ण्यन्तात् कर्मणि क्तः । तत् कीर्तिमण्डलं यस्य सः महसां राशिः रविरिव तेजस्वीत्यर्थः । महैरुत्सवैरुज्ज्वलः प्रकाशमानः, नित्यमहोत्सवशालीत्यर्थः । "मह उद्धव उत्सवः" इत्यमरः । एतेन समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारो व्यज्यते । नलो नलाख्यः स राजा आसीत् अस्ति स्म । अत्र सुधायां अनादरासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । महसां राशिरिति तेजस्तद्वतोरभेदोक्तेर्भेदेऽप्यभेदरूपातिशयोक्तिः । कीर्तिमण्डले सितच्छत्रत्वनिरूपणात् रूपकालङ्कार इति त्रयाणां संसृष्टिः । अस्मिन्सर्गे वंशस्थवृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

**रसैः कथा यस्य सुधावधीरिणी नलस्स भूजानिरभूद्गुणाद्भुतः ।**
**सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डलः ॥ २ ॥**

अथ तस्य गुणवर्णनायोपोद्घातत्वेन सामान्यतः गुणाढ्यत्वं तावदाह—**रसैरिति** ॥ यस्य नलस्य, कथा, रसैः स्वादैः । "रसो गन्धे रसे स्वादः"

---

अत्र हि व्यतिरेकोऽलङ्कारः । प्रतापकीर्त्योर्यथासङ्ख्यं सुवर्णदण्डत्वसितातपत्रत्वाभ्यां रूपणाद् यथासङ्ख्यालङ्कारोऽपि । सुवर्णदण्डसितच्छत्रे उक्ते ततस्तेनैव क्रमेण प्रतापावलिकीर्तिमण्डले निर्दिष्टे इत्यनयोः सङ्कर इति विद्याधराशयः ॥ २ ॥

इति विश्वः । सुधामवधीरयति तिरस्करोतीति सुधावधीरिणी । अमृतादतिरिच्यमानस्वादेत्यतिशयोक्तिः । "ताच्छील्ये णिनिः" । भूर्जाया यस्य सः भूजानिः, भूमेरेकाधिराडित्यर्थः । "जायाया निङ्" इति बहुव्रीहौ जायाशब्दस्य निङादेशः । स नलः गुणैः पुण्यश्लोकेत्यादिभिरद्भुतोऽभूत् । अत्र नलस्य पूर्वश्लोकोक्तसत्तानुवादेन गुणाढ्यत्वविधेर्न पौनरुक्त्यम् । कथंभूतः सुवर्णदण्डश्च एकसितातपत्रञ्च ते कृते तथोक्ते । द्वन्द्वात् "तत्करोति" इति ण्यन्तात् कर्मणि क्तः । सुवर्णदण्डैकसितातपत्रिते, ज्वलत्प्रतापावलिः कीर्तिमण्डलञ्च ते येन स तथोक्तः अप्रतिहतकीर्तिप्रताप इत्यर्थः । अत्रावलिमण्डलशब्दौ प्रतापकीर्त्योर्दण्डत्वातपत्रत्वरूपणयोगार्थम् । इह कीर्तेरातपत्रत्वरूपणं पूर्वश्लोकोक्तमपि सुवर्णदण्डवैशिष्ट्यादस्याप्यपूर्वत्वाद्वैचित्र्यविशेषः प्रतापकीर्त्योर्यथासंख्यं सुवर्णदण्डत्वसितातपत्रत्वरूपणाद्यथासंख्यरूपकातिशयोक्तीनां संसृष्टिः ॥ २ ॥

**पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा ।**
**कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति॥३॥**

कविः काव्यवर्ण्यनायकस्योत्कर्षमावहन् सम्प्रति स्वविनयमाविष्करोति—पवित्रमिति ॥ अत्र युगे अस्मिन् कलियुगे, तस्य नलस्य कथा तत्कथा, स्मृता सती जगत् लोकम् । रसक्षालनयेव अम्बुक्षालनयेवेत्युत्प्रेक्षा । 'देहधात्वम्बुपारदा' इति रसशब्दार्थोक्तौ विश्वः । पवित्रमातनुते शुभ्रं करोति । सा तत्कथा आविलां कलुषामपि । स्वसेविनीमेव स्वं सेवमानाम्, निरन्तरकीर्तनपरामित्यर्थः । मद्गिरं कथं न पवित्रयिष्यति, पवित्रं करिष्यत्येवेत्यर्थः । "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्" इति स्मरणादिति भावः । या स्मृतिमात्रेण शोधनी सा कीर्तनात् किमुतेति कैमुत्यन्यायेन शोधकत्वोक्तेरर्थापत्तिरलङ्कारः । 'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा भवेत् । कैमुत्यन्यायतस्सा स्यादर्थापत्तिरलंक्रिया ॥' इति लक्षणात् ॥ ३ ॥

---

अत्र रसक्षालनयेवेत्युत्प्रेक्षालङ्कार इति विद्याधराशयः ॥ ३ ॥

अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतस्स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥४

अथास्य पूर्वोक्तगुणाद्भुतत्वं प्रपञ्चयति—अधीति ॥ अयं नलः चतुर्दशसु विद्यासु, वेदवेदाङ्गादिषु । 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश' इति स्मरणादिति भावः । अधीतिरध्ययनम् । बोधोऽर्थावगतिः । आचरणं तदर्थानुष्ठानं प्रचारणमध्यापनं तैश्चतुर्भिरुपाधिभिर्विशेषणैः । ' उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे " इति विश्वः । चतस्रः दशाः अवस्थाः प्रणयन् प्रापयन् अर्थाद्विद्यानामेव कर्मत्वं आधारत्वन्तु वक्ष्यमाणचतुर्दशत्वधर्मापेक्षयेति विवेकः । चतस्रो दशा अवस्था यासां तासां भावश्चतुर्दशत्वम् । "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः " इति स्त्रियां पुंवद्भावः । संज्ञाजातिव्यतिरिक्ताश्च गुणवचना इति सम्प्रदायः । चतुर्दशसंख्याकत्वं गम्यते । तदभेदाध्यवसायेन विरोधमाभासयति । कुतः कथं वा स्वयं कृतवान् न वेद्मि तत्करणं दुर्विज्ञेयमित्यर्थः । स्वतः सिद्धस्य स्वयं करणं कथं पिष्टपेषणादित्येको विरोधः । चतुर्दशानां चतुर्थावृत्तौ षट्पञ्चाशतः कथं चतुर्दशत्वमित्यपरः । चतुरवस्थापरत्वेन तत्परिहाराद् विरोधाभासोऽलङ्कारः । ' आभासत्वे विरोधस्य विरोधाभास उच्यते ' इति लक्षणात् । फलवदर्थावबोधपर्यन्तोऽस्य विद्यापरिश्रम इति भावः ॥ ४ ॥

अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ ५ ॥

अमुष्येति ॥ अमुष्य नलस्य रसनाग्रनर्तकी रसनाग्रसञ्चारिणीत्यर्थः । शिल्पिनष्ष्वुन् " षिद्गौरादिभ्यश्च " इति ङीष् । सा विद्या सुदविद्येत्यर्थः ।

---

अत्राप्युत्प्रेक्षालङ्कार इति विद्याधरः ॥ ४ ॥

अत्र श्लोके त्रयीवेत्युपमालङ्कारः । जिगीषयेत्यत्राध्यवसायस्य सिद्धत्वादतिशयोक्तिरिति विद्याधराशयः ॥ ९ ॥

अस्याश्च रसनेन्द्रियग्राह्यार्थप्रतिपादकत्वाद्रसनाग्रनर्तकीति व्यपदेशः । त्रयीव त्रिवेद इव । 'इति वेदास्त्रयस्त्रयी' इत्यमरः । अङ्गानाम् अङ्गभूतानां रसानां षण्णां गुणेन उल्बणानुल्बणसमानरूपेण त्रिविधेन धर्मेण, अन्यत्राङ्गानां षण्णां निरुक्तादीनां गुणेन आवृत्त्या विस्तरं प्रपञ्चं नीता सती, नवानां द्वयं लक्षणया नवकद्वयम् अष्टादशेत्यर्थः । तस्य द्वीपानां याः पृथग्भूता जयश्रियस्तासां जिगीषया जेतुमिच्छयेवेत्यर्थः व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । अष्टादशताम् । अगाहत अभजत । विद्यापक्षे षण्णां रसानामुक्तरीत्या त्रैगुण्यात् त्रयीपक्षे तु एकैकवेदस्यैकैकाङ्गवैशिष्टयेन षाड्विध्याच्चाष्टादशत्वलाभः 'विद्या ह्यष्टादश स्मृता' इति स्मरणात् । अङ्गविद्यागुणेन त्रय्या अष्टादशत्वमिति । उपाध्यायविश्वेश्वरभट्टारकव्याख्याने तु 'अङ्गानि वेदाश्चत्वारः' इत्यथर्वणस्य पृथग्वेदत्वे त्रयीत्वहानिः । त्रय्यन्तर्भावे तु 'नाष्टादशत्वसिद्धिः' इति चिन्त्यम् । उपमोत्प्रेक्षयोस्संसृष्टिः ॥ ५ ॥

दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसभावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ ६

दिगीशेति ॥ दिगीशवृन्दस्य इन्द्रादिदिक्पालकसंघस्य अंशा मात्रास्तेषां विभूतिर्महिमा । अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप इति स्मरणादिति भावः । अत्र नलस्य विभूतेर्भेदेऽप्यभेदोक्तेरतिशयोक्तिः । दिशामीशिता दिशामिति बहुवचनात् इन्द्रादीनामेकैकदिगीशत्वम् । नलस्य सर्वदिगीशत्वमिति व्यतिरेको व्यज्यते । स नलः कामस्येच्छायाः प्रसभं बलात्कारमवरुणद्धीति तथोक्ताम् । स्वेच्छावृत्तिनिवारिकामित्यर्थः । अन्यत्र कन्दर्पघ्नीमित्यर्थः । निजमात्मीयं यत् त्रिनेत्रावतरत्वं दिगीशांशप्रभवत्वप्रयुक्तमीश्वरावतारत्वम् । तस्य बोधिकां ज्ञापिकाम् । तृतीयदृश ईश्वरलक्षणत्वादिति भावः । अत्र "कर्तरि च" इति कृद्योगलक्षणसमासस्यैव निषेधाच्छेषषष्ठीसमासः । "तत्प्रयुक्तम्" इति सूत्रकारादिप्रयोगदर्शनादिति ।

अत्रोपमालङ्कार इति विद्याधरः ॥ ६ ॥

शास्त्राणि श्रुतिस्मृत्यादीनि, द्वयाधिकां तृतीयां दृशमिति रूपकं बभार । ईश्वरांशत्वं सिद्धमित्यर्थः । विशालाक्षोऽपि शास्त्रैरेव चक्षुष्मानासीदिति भावः । अवतर इत्यत्र " ऋदोः " इति अप्प्रत्ययस्तेन तरशब्देनावशब्दस्य " सुप् सुपा " इति समासः । न तूपसृष्टात्प्रत्ययोत्पत्तिः । " अवे तृस्त्रो-र्घञ् " इति घञ्प्रत्ययस्स्यात् । सति तु तस्मिन्नवतार इति स्यात् । अत्रोक्तयोः रूपकातिशयोक्त्यास्संसृष्टिः ॥ ६ ॥

**पदैश्चतुर्भिस्सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ।**
**भुवं यदेकांघ्रिकनिष्ठया स्पृशन् दधावऽधर्मोऽपि कृशस्तपस्वितम् ७**

पदैरिति ॥ अमुना नलेन कृते कृतयुगे धर्मस्य वृषरूपत्वाच्चतुर्भिः पदैः चरणैस्तुर्यभागैश्च सुकृते स्थिरीकृते सति तपः के न प्रपेदिरे । सर्वेऽपि प्राप्ता एवेत्यर्थः । कुतः यत् यस्मात् अधर्मोऽपि कृशस्सन् एकांघ्रेः एकपादस्य कनिष्ठया अङ्गुल्या भुवं स्पृशन् । कृतेऽप्यधर्मस्य लेशतस्सम्भवादंशेन स्पृशती-त्यर्थः । तपस्वितां तापसत्वं दीनत्वं च दधौ ॥ ' मुनिदीनौ तपस्विनौ ' इति विश्वः । अस्य शासनादधर्मोऽपि धार्मिकोऽभूत् । किमुताऽन्य इति भावः । अत एवार्थापत्तिरलङ्कारः । तेन धर्मोऽपि धार्मिको भवतीति विरोधो व्यज्यते ॥ ७ ॥

**यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।**
**तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥८॥**

यदिति ॥ यस्य नलस्य यात्रासु बलोद्धतं सैन्योत्क्षिप्तं स्फुरतः प्रताप-स्यैवानलस्य यो धूमस्तस्यैव मञ्जिमा मञ्जुत्वं यस्य तत्तथोक्तम् । सप्तम्यु-

---

अत्रानुप्रासः शब्दालङ्कारः । अनुमानमर्थालङ्कारः । अधर्मोऽपि तपस्वितां दधाविति विरोधाभास इति विद्याधरः ॥ ७ ॥

अत्रातिशयोक्तिरिति विद्याधरः । अथच यत्पतितं पातित्यहेतुस्तदन्यस्य निर्मलस्यापि स्वसंसर्गान्मालिन्यं करोति तदेव दधातीति काकुर्लक्षोत्प्रेक्षावेति प्रकाशकारः ॥ ८ ॥

पमानेत्यादिना बहुव्रीहिः । मञ्जुशब्दादिमनिच् । यद्रजः तदेव गत्वा सुधाम्बुधौ पतितं सत् पङ्कीभवत् द्रवद्रव्यमेलनात् पङ्कीभूतम् । विधौ चन्द्रे । अङ्कतां कलङ्कत्वं दधाति । पङ्कादुत्पन्नः पङ्किलो भवति पङ्किलत्वं चास्यान्यथा न सम्भवेदिति भावः । रूपकसंसृष्टा गम्योत्प्रेक्षा ॥ ८ ॥

स्फुरद्धनुर्निस्वनतद्घनाशुगप्रगल्भवृष्टिव्ययितस्य सङ्गरे ।
निजस्य तेजश्शिखिनः परश्शता वितेनुरिङ्गालमिवायशः परे ॥९॥

स्फुरदिति ॥ सङ्गरे युद्धे शतात्परे परश्शता अपरिमिता इत्यर्थः । पञ्चमीति योगविभागात् समासः । राजदन्तादित्वादुपसर्जनस्य परनिपातः, पारस्करादित्वात्सुडागमः । परे शत्रवः स्फुरन्तौ धनुर्निस्वनौ निजचापतद्घोषावेव इन्द्रचापगर्जिते यस्य स तथोक्तः, स चासौ घनस्तद्घनः स नल एव घनस्तस्याशुगानां प्रगल्भवृष्टिर्महावृष्टिः । सैवाशुगेन वायुना प्रगल्भवृष्टिः । 'आशुगौ वायुविशिखौ' इत्यमरः । तया व्ययितस्य निर्वापितस्य विपूर्वादयतेः कर्मणि क्तः । निजस्य तेजश्शिखिनः प्रतापाग्नेरिङ्गारमिवेत्युत्प्रेक्षा । देश्यशब्दोऽयं अयशोपकीर्तिं वितेनुः 'अयशः श्यामम्' इति कविप्रसिद्धिः । असपत्नोऽयमिति भावः । रूपकोत्प्रेक्षयोः सङ्करः ॥ ९ ॥

अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद् भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः ॥१०

अनल्पेति ॥ राज्ञो हन्तीति राजघः, शत्रुघातीत्यर्थः । 'राजघ उपसंख्यानम्' इति निपातः । स नलः अनल्पदग्धान्यरिपुराणि यैस्ते अनल्पदग्धारिपुराः, अत एव अनलवदुज्ज्वला अनलायमानास्तैर्निजप्रतापैरेव जयाय सृष्टया नीराजनया आरार्तिकया ज्वलद्दीप्यमानं भुवो वलयं प्रदक्षिणीकृत्य प्रदक्षिणं परिभ्रम्य रराज । अत्र ज्वलत्प्रतापानलो नलः दिग्जैत्रयात्रां प्राच्यादिप्रादक्षिण्येन भूमण्डलं परिभ्रमन् निजप्रतापनीराजनया भूदेवतां

---

अत्रोपमारूपकश्चालङ्काराविति विद्याधरः ॥ ९ ॥
अनुप्रासोऽलङ्कारः, लुप्तोपमालङ्कारश्चेति विद्याधरः ॥ १० ॥

नीराजयन्निव रराजेत्युत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या । किञ्च प्रतापानलैर्नीराजनयेति प्रतापानलस्य नीराजनत्वरूपणमर्थादरिपुराणां वर्तित्वरूपणमक्षमकमित्येकदेशवर्ती तदुत्थापिता चेयमुत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १०

निवारितास्तेन महीतलेऽखिले निरीतिभावं गमितेऽतिवृष्टयः ।
न तत्यजुर्नूनमनन्यसंश्रयाः प्रतीपभूपालमृगीदृशां दृशः ॥ ११ ॥

निवारिता इति ॥ तेन नलेन । निरीतिभावम् ईतिबाधारहितत्वं गमिते अखिले महीतले । निवारिता निष्कासिता अपि शरणं गताः अतिवृष्टयः अनन्यसंश्रया आश्रयान्तरशून्यास्सत्यः प्रतीपभूपालमृगीदृशां शत्रुवधूनां दृशः चक्षूंषि न तत्यजुः । यथा निष्कासिता अपि शरणङ्गतास्तत्रैव तदाज्ञया कुत्रचित्तिष्ठन्ति तद्वदित्यर्थः । नूनमित्युत्प्रेक्षा । अरिवधास्तन्नार्यो निरन्तरं रुदन्तीति भावः । 'अतिवृष्टिरनावृष्टिर्मूषकाश्शलभाश्शुकाः । अत्यासन्नाश्च राजानष्षडेता ईतयस्स्मृताः' इति ॥ ११ ॥

सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नस्सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गावरणं रणाङ्गणे यशःपटं तद्भटचातुरी तुरी ॥ १२ ॥

सितांशुवर्णैरिति ॥ महासिरेव वेमा वायदण्डः । 'पुंसि वेमा वायदण्डः' इत्यमरः । तस्य सहकृत्वरी सहकारिणी । 'सहे च' इति करोतेः क्वनिप् प्रत्ययः । "वनोरच" इति ङीप् रेफश्च । तस्य नलस्य भटानां चातुरी चातुर्यं सैव तुरी वयनसाधनविशेषस्सैव कर्त्री सितांशोः चन्द्रस्येव वर्णो येषां तैः शुभ्रैरित्यर्थः । अन्यत्र सिताः शुक्ला अंशूनामवयवानां वर्णाः कारणत्वेन येषां तैः कारणगुणपूर्वकैरित्यर्थः । तद्गुणैः तस्य नलस्य गुणैः

---

नूनमुत्प्रेक्षायां वेतिप्रकाशकारः । "नूनमनन्यविश्रमाः सत्यो दृष्टीर्न तत्यजुरित्यहं मन्ये" इत्युत्प्रेक्षा । तरुणीरोदनप्रतिपादनेन नलेनाखिला राजानः क्षयं नीता इति पर्यायोक्तमलङ्कारः । तथा च राजानक रुय्यकः "गम्यस्यापि भङ्ग्यन्तरेणाख्यानं पर्यायोक्तम्" अतिवृष्टय इत्यतिशयोक्तिरिति विद्याधरः ॥ ११ ॥

अत्र व्यतिरेकालङ्कार इति प्रकाशकारः । रूपकमलङ्कार इति विद्याधरः ॥ १२ ॥

शौर्यधैर्यादिभिः तैरेव गुणैः तन्तुभिः श्लिष्टरूपकम्। दिशामेवाङ्गनानाम् अङ्गावरणं गात्रसंवरणं, बहुं महान्तं यश एव पटं, रणाङ्गणे, वयति स्म ततान। रूपकालङ्कारः॥ १२॥

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥१३॥

प्रतीपभूपैरिति॥ प्रतीपभूपैः प्रतिपक्षराजैरिव, विरुद्धधर्मैः सहानवस्थायिधर्मैरपि, ततो नलाद्भिया भयेन भेत्तृता स्वाश्रयभेदकत्वमुज्झिता त्यक्ता। किं कुतो, यत यस्मात्, स नलः, ओजसा तेजसा, मित्रजित् सूर्यजिदपि, अमित्रजिन्मित्रजिन्न भवतीति विरोधः, शत्रुजिदित्यविरोधः। 'चारदृक् राजानश्चारचक्षुषः' इति शास्त्रात्। गूढचारचक्षुरपि। विचारदृक् चारदृक् न भवतीति विरोधः, विचारेण पश्यतीत्यविरोधः। अवर्तत। अपिर्विरोधः। अत एवायं विरोधाभासोऽलङ्कारः। एतदुपजीवनेन विरुद्धधर्माणां स्वाश्रयभेदकत्वाभावोत्प्रेक्षा। सा च प्रतीपभूपैरिवेत्युपमानुप्राणितेति त्रयाणां सङ्करः॥ १३॥

तदोजसस्तद्यशसस्स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा।
तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि॥

तदोजस इति॥ तदोजसस्तत्प्रतापस्य तद्यशसः। स्थितौ सत्यां तयोः स्थितयोरित्यर्थः। इमौ वक्ष्यमाणौ भानुश्च विधुश्च वृथा व्यर्थाविति यदा यदा चित्ते कुरुते अनुसन्धत्ते। तदा तदा, तदेत्यर्थः। परिवेषस्य कादाचित्कत्वादिति भावः। विधिर्विधाता भानोर्विधोरपि परिवेषस्य परिधेः

---

अत्र "आभासत्वे विरोधस्य विरोधाभास उच्यते" इति लक्षणाद् विरोधाभासः॥ १३॥

"उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम्" इति राजानकरुय्यककृतलक्षणादत्र प्रतीपालङ्कारः। स परिवेषो न भवति, किन्तु परिवेषच्छलेन निरर्थकत्वप्रतिपादिका कुण्डलनेयमित्यपह्नुतिः "प्रकृतं यन्निषिध्यान्यत्साध्यते सात्वपह्नुतिः" इति विद्याधरः॥ १४॥

कैतवान्मिषात् । 'परिवेषस्तु परिधिः' इत्यमरः । कुण्डलनां कुण्डलरेखां तनोति यथा लिखन्तोऽधिकाक्षरवर्जनायेति भावः । विजितचन्द्रार्कौ तस्य कीर्तिप्रतापाविति भावः । अत्र परिवेषमिषेण सूर्याचन्द्रमसोः कुण्डलितोत्प्रेक्षणात्सापह्नवोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या ॥ १४ ॥

**अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।**
**मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नलः ।१५।**

अयमिति । अल्पितकल्पपादपः त्यागशीलतया स्वल्पीकृतकल्पवृक्षो नलः । अर्थिजनस्य ललाटे जाग्रतीं प्रकाशमानाम् । अयं जनो दरिद्रो निःस्वो भविष्यतीत्येवंरूपाम् । वैधसीं वैधात्रीं लिपिम् अक्षरविन्यासम् । दारिद्र्यदरिद्रतां दारिद्र्यरहितत्वम् । प्रणीय सम्पाद्य मृषा मिथ्या न चक्रे । ब्रह्मशासनस्यान्यथाकर्तुमशक्यत्वात् कथञ्चिदस्याप्यर्थवत्तां सम्पादितवानित्यर्थः । ब्रह्मलिखितमप्यन्यथाकर्तुं क्षमोऽयमिति भावः । एवं करणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ १९ ॥

**विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।**
**अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरस्स्थितम् ॥**

विभज्येति ॥ मेरुर्विभज्य अर्थिसादर्थ्यधीनः । "देये त्रा च" इति सातिप्रत्ययः । न कृतः । सिन्धुरुत्सर्गजलव्ययैर्दानाम्बुविनियोगैः मरुः निर्जलदेशो न कृत इति यत् । तेन नलेन तत्पूर्वोक्तम् अयशोयुगमपकीर्तिद्वयम् । द्वयोः फालयोः शिरोभागयोर्बद्धाः संयताः । फलतेर्विशरणार्थाद्घञ् प्रत्ययः । प्रायेणोदीच्यानां पुंसामपि सीमन्तितशिरोरुहत्वात् द्विफालबद्धा इत्युक्तम् । एवं द्विधा विभक्ताः चिकुराः शिरोरुहाः तत् शिरःस्थितममानि । द्विधाकृतकेशरूपेण अयशोयुगलमेव स्वशिरसि तिष्ठतीत्यमन्यतेत्यर्थः । 'मन्यतेः कर्मणि लङ्' । केशेषु कार्ष्ण्यसाम्येनायशोरूपणाद्रूपकालङ्कारः ॥ १६ ॥

---

अयं नलः द्विफालबद्धान् केशान्न बिभर्ति, अपितु शिरःस्थितमयशोयुगमेतदित्यपह्नुतिरिति विद्याधरः ॥ १६ ॥

अजस्रमभ्याशमुपेयुषा समं मुदैव देवः कविना बुधेन च।
दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥१७॥

अजस्रमिति। दिनेश्वरस्य श्रीरिव श्रीः यस्य स इति निदर्शनालङ्कारः पटीयानयं देवो राजा। सूर्यपक्षे सुरश्च। 'देवस्सुरे घने राज्ञि' इति विश्वः। अजस्रं मुदा सम्मानकृतसन्तोषेणैव। न तु निर्बन्धेनेति भावः। अभ्याशं समीपमुपेयुषा। "उपेयिवाननाश्वाननूचानश्च" इति निपातः। कविना कविभिर्बुधेन बुधैश्च समम्। न तु दुष्टैरिति भावः। उभयत्र जात्येकवचनम्। अन्यत्र बुधशुक्राभ्यां सहेत्यर्थः। तत्साहचर्यं सूर्यस्य ज्योतिश्शास्त्रादवगन्तव्यम्। समयं कालं नयन्। दिने दिने प्रत्यहमुदयमाविर्भावं दधौ। अत्र निदर्शनश्लेषयोस्सङ्करः॥ १७॥

अधोविधानात् कमलप्रवालयोश्शिरस्सुधानादखिलक्षमाभुजाम्।
पुरेदमूर्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया॥१८॥

अध इति॥ कमलप्रवालयोः पद्मपल्लवयोः कर्मणोः। अधोविधानात् अधःकरणात्तिरस्करणाच्चेति सौन्दर्यातिशयोक्तिः। अखिलक्षमाभुजां सर्वराज्ञां शिरस्सुधानादिति शौर्यातिशयोक्तिः। इदमस्य नलस्य पदं चरणमूर्ध्वमुत्कृष्टमुपरिस्थञ्च। पुरा भवति भविष्यति। "यावत् पुरा निपातयोर्लट्" इति भविष्यदर्थे लट्। इतीत्थम्। मत्वेति शेषः। गम्यमानार्थत्वादप्रयोगः। वेधसा कर्त्रा ऊर्ध्वरेखयाङ्कितम्। सौन्दर्यशौर्याभ्यां सर्वोत्तरं भवतीति ज्ञापनार्थं चिह्नितं किमित्युत्प्रेक्षा। ऊर्ध्वरेखाङ्कितपादस्सर्वोत्तरो भवतीति सामुद्रिकः १८

जगज्जयं तेन च कोशमक्षयं प्रणीतवान् शैशवशेषवानयम्।
सखा रतीशस्य ऋतुर्यथा वनं वपुस्तथालिङ्गदथास्य यौवनम् १९

एवमस्य गुणाद्भुतत्वमभिधायाधुना वक्ष्यमाणकथोपयोगितयास्य यौवनप्राप्तिमाह—जगदिति॥ अयं नलः शैशवशेषवान् ईषदवशिष्टशैश-

अत्रोपमाश्लेषसहोक्तयोऽलङ्कारा इति विद्याधरः॥ १७॥
अत्र "सम्भावनमथोत्प्रेक्षा" इत्युत्प्रेक्षेति विद्याधरः॥ १८॥
अत्रोपमेति विद्याधरः॥ १९॥

वावस्थ एव । जगज्जयं प्रणीतवान् । तेन जगज्जयेन अक्षयं कोशमर्थजातं च । प्रणीतवान् सम्पादितवान् । अथ रतीशस्य सखा मदनमित्रम् । ऋतुर्वसन्तो वनं यथा । तथा यौवनमस्य वपुरालिङ्गत् आश्लिष्यत् । रतीशस्य इत्यत्र "ऋत्यकः" इति सूत्रेण पाक्षिकः प्रकृतिभावः । उपमालङ्कारः ॥ १९ ॥

अधारि पद्मेषु तदंघ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥

अथ यौवनं वर्णयति—अधारीति ॥ तदङ्घ्रिणा तच्चरणेन पद्मेषु विषये । घृणा जुगुप्सा । अवज्ञेति यावत् । 'घृणा जुगुप्साकृपयोः' इति विश्वः । अधारि धृता । तेषामतिनीचत्वादिति भावः । पल्लवे तच्छयस्य तत्पाणेश्छाया । तच्छयच्छायम् । 'पञ्चशाखश्शयः पाणिः' इत्यमरः । 'विभाषा सेना' इत्यादिना समासे छायाशब्दस्य नपुंसकत्वम् । तस्य लवो लेशोऽपि क्व कुतः । शरदि भवः शारदः । "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" इत्यण् । पर्वणि भवः । पार्विकः । "कालाट्ठञ् नस्तद्धिते" इति टिलोपः । स चासौ शर्वरीश्वरः । तदास्यदास्ये नलमुखकैङ्कर्येऽप्यधिकारितां योग्यतां न गतः अतोऽस्य पादपाणिमुखमप्रतिममिति भावः । अत्राङ्घ्र्यादीनां पद्मादिषु घृणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २० ॥

किमस्य रोम्णां कपटेन कोटिभिर्विधिर्न रेखाभिरजीगणद्गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यबिन्दवः ॥ २१ ॥

किमिति ॥ विधिर्वेधा अस्य नलस्य गुणान् रोम्णां कपटेन मिषेण कोटिभिः रेखाभिः नाजीगणत् न गणितवान् किम् । "ई च गणः" इति गणेरभ्यासस्येकारः गणेर्णौ चङ् । जगत्कृता विधात्रा रोमकूपानामोघस्य मिषात् दूषणानां दोषाणां शून्यस्यात्यन्ताभावस्य बिन्दवो ज्ञापकवर्तुलरेखाः न कृताः किम् । अस्मिन् गुणा एव, दोषा न सन्तीति भावः । अत्र रोम्णां रोमकूपानां च । कपटमिषशब्दाभ्यां ताद्रूप्यापह्नवेन गुणगणनारेखात्वदूषणशून्यबिन्दुत्वयोरुत्प्रेक्षणात् सापह्नवोत्प्रेक्षयोः संसृष्टिः ॥ २१ ॥

---

छेकानुप्रासपरिकरालङ्कारसंसृष्टिरिति विद्याधरः ॥ २० ॥

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरश्श्रिया तत्र च गोपुरस्फुरत्कवाटदुर्धर्षतिरःप्रसारिता ॥२२॥

अमुष्येति ॥ अमुष्य नलस्य दोर्भ्यामरिदुर्गाणां लुण्ठने भञ्जने अर्गलानां कवाटविष्कम्भदारूणाम् । 'तद्विष्कम्भेऽर्गलं न ना' इत्यमरः । दीर्घाणि च पीनानि च तेषां भावो दीर्घपीनता आयतपीवरत्वं गृहीता ध्रुवम्, किञ्चामुष्योरःश्रिया वक्षोलक्ष्म्या कर्त्र्या च । तत्र अरिदुर्गलुण्ठने गोपुरेषु पुरद्वारेषु स्फुरतां कवाटानां दुर्धर्षाणि च तिरःप्रसारीणि च तेषां भावस्तत्ता अप्रधृष्यत्वं विशालत्वञ्चेत्यर्थः । सा गृहीता ध्रुवम् अर्गलदीर्घबाहुरयं कवाटवक्षाश्चेति भावः । अत्राप्युत्प्रेक्षयोः संसृष्टिः ॥ २२ ॥

स्वकेलिलेशस्मितनिर्जितेन्दुनो निजांशदृक्तर्जितपद्मसम्पदः ।
अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे ॥२३॥

स्वकेलीति ॥ स्वकेलिलेशस्मितेन स्वविलासलेशस्मितेन निर्जितेन्दुनो निराकृतचन्द्रस्य निजांशेन स्वावयवेन दृशा दृष्ट्या तर्जितपद्मसम्पदः भर्त्सितकमलसौन्दर्यस्य तन्मुखस्य तयोः चन्द्रारविन्दयोः द्वयी युगं तस्याः जित्वरं जिष्णुतरं सुन्दरान्तरं यत्र नास्ति तस्मिन् चराचरे जगति । 'चराचरं स्याज्जगति' इति विश्वः । प्रतिमा उपमा नास्तीत्यर्थः । अस्तिर्भवतिशब्दोऽप्यप्रयुज्यमानोऽपि अस्तीति वचनात् । अत्र चन्द्रारविन्दविजयस्य विशेषणतया नलमुखे अप्रतिमानहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २३ ॥

सरोरुहं तस्य दृशैव निर्जितं जिताः स्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता ॥२४॥

---

अत्रोत्प्रेक्षोपम इति विद्याधरः ॥ २२ ॥

अत्र "आक्षेप उपमानस्य प्रतीपमुपमेयता । तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्" इति प्रतीपालङ्कार इति विद्याधरः ॥ २३ ॥

यः जित्वा परस्य श्रियम् आनयति, तस्य किं दारिद्र्यं भवतीति विभावनाप्यलङ्कारः "क्रियायाः प्रतिषेधेऽपि फले व्यक्तिर्विभावना" इति विद्याधरः।२४

उक्तमेवार्थं भङ्ग्यन्तरेणाह—सरोरुहमिति ॥ तस्य दृशैव सरोरुहं निर्जितं स्मितेन मन्दहासेनैव विधोरिन्दोः श्रियः कान्तयोऽपि जिताः परं आभ्यामन्यद्द्वयं रम्यं वस्तु कुतः न कुत्रापीत्यर्थः । तदाननस्योपमितौ उपमाने महीयसी गरीयसी दरिद्रता नास्तिता अहो । अत्रापि चन्द्रारविन्द-विजयस्य वाक्यार्थस्य मुखोपमानदारिद्र्यहेतुत्वाद्वाक्यार्थहेतुकं काव्य-लिङ्गम् ॥ २४ ॥

स्वबालभारस्य तदुत्तमाङ्गजैस्स्वयञ्चमर्येव तुलाभिलाषिणः ।
अनागसे शंसति बालचापलं पुनः पुनः पुच्छविलोलनच्छलात् ॥

स्वबालेति ॥ चमरी मृगविशेषः । स्वयमेव तदुत्तमाङ्गजैर्नलमूर्धजैः तुलाभिलाषिणः साम्याभिलाषलक्षणापराधिन इत्यर्थः । जघन्यस्य उत्तम-जन्मभिः सह साम्याभिमानोऽपि महानपराध इतिभावः । स्वबालभारस्य निजरोमनिचयस्य अनागसे अनपराधाय क्वचित्तदभावेऽपि नञ्समास इष्यते । पुनःपुनः पुच्छस्य विलोलनच्छलाद्विलोलनव्याजात् बालचापलं रोम-चाञ्चल्यम् । बबयोरभेदाद्बालचापलं शंसति कथयति । बालचापलं सोढ-व्यमिति समाधत्त इत्यर्थः । अत्र पुच्छविलोलनं छलशब्देनापह्नुत्य बबयोरभेदाध्यवसायेन बालचापलत्वारोपादपह्नवभेदः ॥ २५ ॥

महीभृतस्तस्य च मन्मथश्रिया निजस्य चित्तस्य च तं प्रतीच्छया
द्विधा नृपे तत्र जगत्त्रयीभुवां नतभ्रुवां मन्मथविभ्रमोऽभवत् ॥२६

अथास्य यौवनप्रवेशफलं प्रस्तौति—महीभृत इति ॥ तस्य महीभृतो नलस्य मन्मथस्येव श्रिया सौन्दर्येण निजस्यात्मीयस्य चित्तस्य तं नलं प्रतीच्छया रागेण च तत्र तस्मिन् नृपे विषये जगत्त्रयीभुवां लोकत्रय-

अत्र चापलमिव शंसतीति प्रतीयमानोत्प्रेक्षा । पुच्छविलोलनच्छलादित्य-पह्नुतिरिति विद्याधरः ॥ २५ ॥

महीभृतस्तस्य च मन्मथश्रियेत्युपमा, मन्मथविभ्रमोऽभवदिति श्लेष इति विद्याधरः ॥ २६ ॥

वर्तिनीनां नतभ्रुवाम् । द्विधा द्वेधा मन्मथविभ्रमोऽभवत् । तत्सौन्दर्या-न्मन्मथभ्रान्तिः सानुरागान्मन्मथविकारश्च अभूदित्यर्थः । विश्वातिशायि सौन्दर्यमस्येति भावः । अत्र नलश्रीविश्वत्रनितेच्छयोः श्लिष्टपदोपात्तयोः विभ्रमद्वयेन यथासंख्यं सम्बन्धात् श्लेषसंकीर्णो यथासंख्यालङ्कारः ॥ २६ ॥

निमीलनभ्रंशजुषा दृशा भृशं निपीय तं यस्त्रिदशीभिरर्जितः ।
अमूस्तमभ्यासभरं विवृण्वते निमेषनिःस्वैरधुनापि लोचनैः ॥२७

निमीलनेति ॥ त्रिदशीभिः निमीलनभ्रंशजुषा निमेषनिवृत्तिभाजा । निर्निमेषयेत्यर्थः, दृशा दृष्ट्या । तं नलं निपीय गाढं दृष्ट्वेत्यर्थः । योऽभ्यास-भरः । अर्जितः कृतः । अमूः त्रिदश्यः । तम् अभ्यासभरं आवृत्त्यतिशयं निमेषनिःस्वैर्निमेषरहितैर्लोचनैः । अधुनापि विवृण्वते प्रकटयन्तीत्यर्थः । तासां स्वाभाविकस्यानिमेषस्य तादृङ्नलनिरीक्षणाभ्यासवासनया तद्धेतुकत्वमुत्प्रेक्षते । सा च इवाद्यप्रयोगाद्गम्या ॥ २७ ॥

अदस्तदाकर्णि फलाढ्यजीवितं दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
इतिस्म चक्षुःश्रवसां प्रिया नले स्तुवन्ति निन्दन्ति हृदा तदात्मनः

अद इति ॥ चक्षुःश्रवसां प्रियाः नागकान्ताः । अदः इदं नोऽस्माकं दृशोर्द्वयं चक्षुषोर्युगम् । तं नलमाकर्णयतीति तदाकर्णि सत् । तासां चक्षुः-श्रवस्त्वादिति भावः । फलाढ्यजीवितम् । न वीक्षत इत्यवीक्षि । अत्रापि ताच्छील्ये णिनिः । तस्यावीक्षि तदवीक्षि सदफलमसत्, अफलञ्चेत्येवम् । नले विषये तदा नलकाले आत्मनः स्वान् हृदा चित्तेन स्तुवन्ति निन्दन्ति स्म । उभयकारणसम्भवादुभयकार्योदय इति भावः । ईदृङ्निन्दास्तुत्य-सम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २८ ॥

---

अत्र इवादिशब्दाभावात्तमभ्यासमिव विवृण्वत इति प्रतीयमानोत्प्रेक्षा । "अध्यवसायस्य च सिद्धत्वादतिशयो वा" इति विद्याधरः ॥ २७ ॥

अत्र हि गुणक्रियाविरोधालङ्कारः । इति विद्याधरः ॥ २८ ॥

विलोकयन्तीभिरजस्रभावनाबलादमुं नेत्रनिमीलनेष्वपि ।
अलम्भि मर्त्याभिरमुष्य दर्शने न विघ्नलेशोऽपि निमेषनिर्मितः ॥

विलोकयन्तीभिरिति ॥ अजस्रभावनाबलान्निरन्तरध्यानप्रभावात् । अमुं नलं नेत्रनिमीलनेषु निमेषावस्थास्वपि । विलोकयन्तीभिरुन्मेषावस्थास्विव साक्षात् कुर्वन्तीभिः मर्त्याभिर्मानुषीभिः अमुष्य नलस्य । दर्शने निमेषनिर्मितो निमीलनकृतो विघ्नलेशोऽपि नालम्भि नालाभि । "विभाषा चिण्णमुलोः" इति विकल्पान्नुमागमः । अत्र मर्त्यानां सर्वावस्थालोकनासम्बन्धेऽपि तत्कथनादतिशयोक्तिः ॥ २९ ॥

न का निशि स्वप्नगतं ददर्श तं जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का चकार वा न स्वमनोभवोद्भवम् ॥

नेति ॥ का स्त्री निशि स्वप्नगतं स्वप्नलब्धमित्यर्थः । तं नलं न ददर्श । गोत्रस्खलिते नामविपर्यासे च । तं का न जगाद नाजुहावेत्यर्थः । रते च का वा तदात्मतया नलात्मकत्वेन ध्यातधवा भावितनिजप्रिया सती । स्वस्य मनोभवोद्भवं मन्मथोद्रेकं न चकार । सर्वापि सर्वं चकारेत्यर्थः । कामान्धाः किं न कुर्वन्तीति भावः । अत्रापि दर्शनाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥

श्रियास्य योग्याहमिति स्वमीक्षितुं करे तमालोक्य सुरूपया धृतः ।
विहाय भैमीमपदर्पया कया न दर्पणः श्वासमलीमसः कृतः ॥३१॥

श्रियेति ॥ तं नलमालोक्य श्रिया रामणीयकेन । अहमस्य योग्या अनुरूपेति स्वमात्मानम् ईक्षितुम् परीक्षितुं करे धृतो दर्पणः, सुरूपया रम्ययैव नाहमस्य योग्येति बुध्यमानया च । 'प्राप्तरूपो बुधे रम्येऽप्यभिरू-

---

अत्र "कारणसामग्र्ये कार्यस्यानुत्पत्तिर्विशेषोक्तिः" इति राजानकरुय्यकोक्तदिशा विशेषोक्तिरलङ्कार इति विद्याधरः ॥ २९ ॥

इह छेकानुप्रास इति विद्याधरः ॥ ३० ॥

अत्र व्यभिचारिभावस्य गर्वस्य प्रशम इति विद्याधरः ॥ ३१ ॥

पल्लुरूपवत्' इति विश्वः। अत एवापदर्पया विगताहङ्कारया कया स्त्रिया। भैमीं विहाय दमयन्तीं वर्जयित्वा श्वासैर्मुखनिश्वासैः मलीमसो मलिनः। "ज्योत्स्ना तमिस्रा" इत्यादिना निपातः। न कृतः सर्वथापि कृत एवेत्यर्थः दर्पणे निजवैरूप्यदर्शनात् अतिसुन्दर्योऽपि तदभिलाषचापलाल्लज्जिता इति भावः। अत्रापि सर्वासामेवंविधव्यापारासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः॥

**यथोह्यमानः खलु भोगभोजिना प्रसह्य वैरोचनिजस्य पत्तनम्।**
**विदर्भजाया मदनस्तथा मनोऽनलावरुद्धं वयसैव वेशितः॥३२॥**

एवं नलस्य लोकोत्तरसौन्दर्यद्योतनाय स्त्रीमात्रस्य तं प्रत्यनुरागमुक्त्वा सम्प्रति दमयन्त्यास्तमाह—यथेति॥ मदनः प्राक् प्रद्युम्नावतार इति भावः। भोगभोजिना सर्पकायखादिना। वयसा खगेन गरुडेन ऊह्यमान ऊढस्सन्। "वहेः कर्मणि यकि सम्प्रसारणे पूर्वरूपम्"। अनलावरुद्धमग्निपरिवेष्टितम्। विरोचनस्यापत्यं पुमान् वैरोचनिः बलिः तज्जस्य बाणासुरस्य पत्तनं प्रसह्य यथा वेशितः प्रवेशितः खलु। "ततो गरुडमारुह्य स्मृतमात्रो गतो हरिः। बलप्रद्युम्नसहितो बाणस्य प्रययौ पुरीम्" इत्युषाहरणे विष्णुपुराणात्। तथा नलावरुद्धं नलाक्रान्तम्। विदर्भजायाः दमयन्त्याः मनः भोगभोजिना सुख भोजकेन। 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। "भुजेर्ण्यन्ताण्णिनिः"। वयसा यौवनेनैव कर्त्रा। खगेनेति गम्यते। "खगबाल्यादिनोर्वयः" इत्यमरः। ऊह्यमानः परैस्तर्क्यमाणः। न तूक्त्या गृह्यमाणः ऊहेर्वितर्कार्थात्कर्मणि यक्। वेशितः प्रवेशितः। रागिणां चेतसि यौवनमेव मदनदोहनमिति भावः। अत्र यथोह्यमानः, मनो नलेति च शब्दश्लेषः। अन्यत्र अर्थश्लेषः। श्लिष्टविशेषणा चेयमुपमा। सा च वयसेति वयसोरभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति सङ्करः॥ ३२॥

अत्र श्लेषोपमालङ्काराविति विद्याधरः॥ ३२॥

नृपेऽनुरूपे निजरूपसम्पदां दिदेश तस्मिन् बहुशः श्रुतिं गते ।
विशिष्य सा भीमनरेन्द्रनन्दिनी मनोभवाज्ञैकवशंवदं मनः ॥३३॥

इह विरहिणां चक्षुःप्रीत्यादयो दशावस्थास्सन्ति । तत्र चक्षुःप्रीतिः श्रवणानुरागस्योपलक्षणम् । अतस्तत्पूर्विकां मनस्सङ्गाख्यां द्वितीयावस्थामाह—नृप इति ॥ सा भीमनरेन्द्रनन्दिनी दमयन्ती । "नन्द्यादित्वाल्ल्युट् प्रत्ययः" निजरूपसम्पदां स्वलावण्यसम्पत्तीनाम् अनुरूपे । बहुशो बहुभ्य इत्यर्थः । "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" इत्यपादानार्थे शस् प्रत्ययः । श्रुतिं श्रवणं गते । एतेन श्रवणानुराग उक्तः । तस्मिन्नृपे नले मनोभवाज्ञाया एकत्रशंवदं एकस्यैव विधेयं, शिवभागवतवत्समासः । "प्रियवशे वदः खच्" । "अरुर्द्विषत्" इत्यजन्तस्य मुम् । मनो विशिष्य दिदेश । 'अस्येदम्' इति निश्चित्य अतिससर्जेत्यर्थः । तद्गुणश्रवणात्तदासक्तचित्ताभूदित्यर्थः ॥ ३३ ॥

उपासनामेत्य पितुस्स्म रज्जते दिने दिने सावसरेषु वन्दिनाम् ।
पठत्सु तेषु प्रति भूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥

अथास्याः श्रवणानुरागमेव चतुर्भिर्वर्णयति—उपासनामिति ॥ सा भैमी दिने दिने प्रतिदिनम् । "नित्यवीप्सयोः" इति वीप्सायां द्विर्भावः । बन्दिनां स्तुतिपाठकानामवसरेषु पितुरुपासनां सेवाम्, एत्य प्राप्य, तेषु वन्दिषु भूपतीन् प्रति भूपतिनुद्दिश्य पठत्सु स्तुतिविशेषैर्नलं शृण्वती अलं रज्जते स्म, अनुरक्ताऽभूदित्यर्थः । अतएव विनिद्ररोमा हृष्टरोमाऽजनीति सात्विकोक्तिः । "जनेः कर्तरि लुङ्" । "दीपजन" इत्यादिना च्लेश्चिणादेशः । नलगुणश्रवणजन्यो रागस्तस्या रोमाञ्चेन व्यक्तोऽभूदित्यर्थः ॥ ३४ ॥

कथानुषङ्गेषु मिथस्सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते ।
द्रुतं विधूयान्यदभूयतानया मुदा तदाकर्णनसज्जकर्णया ॥ ३५ ॥

कथानुषङ्गेष्विति ॥ मिथोऽन्योन्यम्, रहसि वा । कथानुषङ्गेषु वि-

---

अत्रानुप्रासोऽलङ्कार इति विद्याधरः ॥ ३३ ॥

नलाकर्णने औत्सुक्यभावोदयाद् अत्र भावोदयालङ्कारः ॥ ३४ ॥

स्तम्भगोष्ठीप्रसङ्गेषु सखीमुखान्नलनामनि नलाख्ये तृणेऽपि । 'नलः पोटगले राज्ञि' इति विश्वः । श्रुते अनया तन्व्या दमयन्त्या द्रुतमन्यत्कार्यान्तरं विधूय निराकृत्य मुदा हर्षेण तदाकर्णने नलशब्दाकर्णने । सज्जकर्णया दत्तकर्णया अभूयत अभावि । "भुवो भावे लङ्" । अर्थान्तरे प्रयुक्तोऽपि नलशब्दो नृपस्मारकतया तदाकर्षकोऽभूदिति रागातिशयोक्तिः ॥ ३५ ॥

**स्मरात्परासोरनिमेषलोचनाद्बिभेमि तद्भिन्नमुदाहरेति सा ।**
**जनेन यूनः स्तुवता तदास्पदे निदर्शनं नैषधमभ्यषेचयत् ॥ ३६ ॥**

**स्मरादिति** ॥ परासोर्मृतात् । अतएव अनिमेषलोचनात् निश्चलाक्षादेवादिति च गम्यते । उभयथापि भयहेतूक्तः । स्मराद्बिभेमि । तद्भिन्नं ततोऽन्यमुदाहर तत्सदृशं निदर्शय, इत्येवं सा दमयन्ती, यूनः स्तुवता जनेन प्रयोज्यकर्त्रा तदास्पदे तत्स्थाने निदर्शनं दृष्टान्तं नैषधं निषधानां राजानं नलम् । "जनपदशब्दात् क्षत्रियादञ्" अभ्यषेचयत् । परासोः स्थाने तत्सदृश एवाभिषेक्तव्यः स च नलादन्यो नास्तीति तस्मिन्नेवोदाहृते सहर्षं शृणोतीति रागातिशयोक्तिः । "उपसर्गात् सुनोति" इत्यादिना अड्व्यवायेऽपि षत्वम् ॥ ३६ ॥

**नलस्य पृष्टा निषधागता गुणान् मिषेण दूतद्विजवन्दिचारणाः ।**
**निपीय तत्कीर्तिकथामथानया चिराय तस्थेऽभिमनायमानया ॥**

**नलस्येति** ॥ निषधेभ्य आगताः दूताः सन्देशहराः, द्विजाः ब्राह्मणाः, वन्दिनः स्तावकाश्चारणा देशभ्रमणजीविनः । ते सर्वे मिषेण केनचिद्व्याजेन नलस्य गुणान् पृष्टाः । "पृच्छतेर्दुहादित्वादप्रधाने कर्मणि क्तः" । अथ प्रश्नानन्तरम् । अनया भैम्या, तत्कीर्तिकथां नलयशःकथामृतं, निपीय, चिराय अभिमना हृष्टा भवतीत्यभिमनायमाना तया । "भृशादित्वात् क्यङ् सलोपश्च" । "अकृत्सार्वधातुकयोः" इति दीर्घः । ततो लटश्शानजादेशः ।

---

अत्र हर्षौत्सुक्ययोः शबलतेति भावशबलतालङ्कारः ॥ ३५ ॥

अत्रापि चिन्तालस्य व्यभिचारिभावस्योदयात्तोदयालङ्कारः ।३७।

तस्थे स्थितम् । भावे लिट् । अयञ्च दूताद्यव्यवधानेन गुणकीर्तनलक्षणः प्रलापाख्यो रत्यनुभावः ॥ ३७ ॥

**प्रियं प्रियां च त्रिजगज्जयिश्रियौ लिखाधिलीलागृहभित्ति कावपि ।**
**इति स्म सा कारुवरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते ॥**

प्रतिकृतिस्वप्नदर्शनादयो विरहिणां विनोदोपायाः अतस्तत्कथनमुखेन दर्शनानुरागं चास्या दर्शयन् प्रतिकृतिदर्शनं तावदाह—**प्रियमिति** ॥ सा भैमी, त्रीणि जगन्ति समाहृतानि त्रिजगत् । समाहारे द्विगुरेकवचनम् । तस्य जयिनी । "जिदृक्षि" इत्यादिना इनिः । सा श्रीर्ययोस्तौ तथोक्तौ । का च कश्च कावपि । "पुमान् स्त्रिया" इत्येकशेषः । प्रियं प्रियाञ्च, कामिनावित्यर्थः । लीलागृहभित्तावधि अधिलीलागृहभित्ति क्रीडागृहमध्य इत्यर्थः । विभक्त्यर्थेऽव्ययीभावः । लिखेति नियुज्येति शेषः । गम्यमानार्थत्वादप्रयोगः । प्रयोगे पौनरुक्त्यदोष इत्यालङ्कारिकाः । कारुवरेण शिल्पिविशेषेण प्रयोज्येन लेखितं नलस्य च स्वस्य च द्वयोरेव तथात्वादिति भावः । सख्यमीक्षते । लिखितादिव्यवधानेन गुणकीर्तनलक्षणः प्रलापाख्यो रत्यनुभावः ॥ ३८ ॥

**मनोरथेन स्वपतीकृतं नलं निशि क्व सा न स्वपती स्म पश्यति ।**
**अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥**

द्विविधं दर्शनम् । साक्षाच्चित्रादौ च । तत्र साक्षादलाभाच्चित्रदर्शनमुक्तम् । अथ द्वाभ्यां स्वप्नदर्शनञ्चाह—**मनोरथेनेति** । सा भैमी मनोरथेन सङ्कल्पेन स्वपतीकृतं स्वभर्तृकृतम् । "अभूततद्भावे च्विः" । "च्वौ" इति दीर्घः । नलं क्व कस्यां निशि । स्वपती निद्रावती सती न पश्यति । सर्वत्रापि निशि अपश्यदेवेत्यर्थः । तत्र सन्तं तं कथमद्राक्षीदित्याशङ्क्य समर्थयति—**अदृष्टमपीति** ॥ सुप्तिः स्वप्नः अदृष्टमत्यन्ताननुभूतमित्यर्थः । किमुत श्रुतमिति भावः । अदृष्टवैभवाद्धर्माधर्मसामर्थ्यात् । जनदर्शनातिथिं लोकदृष्टिविषयं करोति तद्वदत्रापि तन्निमित्तादृष्टात्तादृक्स्वप्नज्ञानमुत्पन्नमित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३९ ॥

निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि संगोप्य कदाप्यवीक्षितो रहस्यमस्यास्स महन्महीपतिः ॥

निमीलितादिति ॥ निद्रया प्रयोजकया । निर्मीलितात् मुकुलितात्, उपरतव्यापारादित्यर्थः । अक्षियुगाच्च तथा बाह्येन्द्रियाणां चक्षुरादीनां मौनेन व्यापारोपरमेण मुद्रितात् प्रतिबद्धात् मनसो बहिरस्वातन्त्र्यात् । हृदो हृदयादपि सङ्गोप्यापवार्य वञ्चयित्वेत्यर्थः । अन्तर्धौ येनादर्शनमिच्छतीत्यक्षियुगमनसोरपादानत्वम् । अदर्शनञ्चात्र मनसो बाह्येन्द्रियमौनमुद्रिता इति विशेषणसामर्थ्यादिन्द्रियार्थसंप्रयोगजन्यज्ञानविरह एवेति ज्ञायते । स्वप्नज्ञानं तु मनोजन्यमेव । अतः तज्जन्यस्य ज्ञानस्यैवाभावादिति कदाप्यवीक्षितः अत्यन्तादृष्टचर इत्यर्थः । महद्रहस्यमतिगोप्यं वस्तु । स महीपतिः नलः । अस्याः भैम्याः, अदर्शि दर्शयाञ्चक्रे । दृशेर्ण्यन्तात् कर्मणि लुङ् । यथा काचिच्चेटी कस्यैचित्कामिन्यै कञ्चन कान्तं दर्शयति तद्वदिति भावः ॥४०॥

अहो अहोभिर्महिमा हिमागमेऽप्यतिप्रपेदे प्रति तां स्मरार्दिताम् ।
तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे ॥ ४१ ॥

अथास्याः चिन्ताजागरावाह—अहो इति हिमागमे हेमन्तेऽपि स्मरार्दितां स्मरपीडितां तां दमयन्तीं प्रति अहोभिर्दिवसैरतिमहिमा अतिवृद्धिः प्रपेदे । तथा तपर्तुपूर्तौ ग्रीष्मान्ते । विभावरीभिः निशाभिर्मेदसाम्भराः । मांसलातिशय इति यावत् । बिभरांबभूविरे बिभ्रिरे । भृञः कर्मणि लिट् । "भीह्रीभृहुवां श्लुवच्च" इति विकल्पादाम्प्रत्ययः । अहो आश्चर्यम् शास्त्रविरोधादनुभवविरोधाच्चेति भावः । विरहिणां तथा प्रतीयत इत्यविरोधः । एतेनास्याः निरन्तरचिन्ता जागरश्च गम्यते । अहोशब्दस्य "ओत्" इति प्रगृह्यत्वात्प्रकृतिभावः ॥ ४१ ॥

---

अत्र हेतौ हिमागमे सत्यपि दिवसानां लघुत्वं न प्रतिपादितम् एवं ग्रीष्मेऽपि निशानां लघुता न प्रतिपादितेति विशेषोक्तिः । छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥ ४१ ॥

**स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः श्रयन्तमन्तर्घटनागुणश्रियम् ।**
**कदाचिदस्या युवधैर्यलोपिनं नलोऽपि लोकादशृणोद्गुणोत्करम् ॥**

अथ नलस्यापि श्रवणानुरागमाह—स्वकान्तीति ॥ अथ नलोऽपि स्वस्य कान्त्या सौन्दर्येण याः कीर्तयः तासां व्रजः पुञ्ज एव मौक्तिकस्रक् मुक्ताहारः तस्य अन्तरभ्यन्तरे घटनागुणश्रियं गुम्फनसूत्रलक्ष्मीं श्रयन्तं भजन्तं युवधैर्यलोपिनं तरुणचित्तस्थैर्यहारिणं अस्याः दमयन्त्याः गुणोत्करं सौन्दर्यादिगुणसन्दोहं कदाचिल्लोकादागन्तुकजनादशृणोत् श्रुतवान् । अत्र कीर्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणाद्रूपकालङ्कारः ॥ ४२ ॥

**तमेव लब्ध्वावसरं ततः स्मरश्शरीरशोभाजयजातमत्सरः ।**
**अमोघशक्त्या निजयेव मूर्तया तया विनिर्जेतुमियेष नैषधम् ॥**

अथास्य तस्यां रागोदयं वर्णयति—तमिति ॥ ततः गुणश्रवणानन्तरं शरीरशोभायाः देहसौन्दर्यस्य जयेन जातमत्सरः उत्पन्नवैरः, स्मरस्तमेवावसरमवकाशं लब्ध्वा । मूर्तया मूर्तिमत्या निजया आत्मीयया, अमोघशक्त्येव अकुण्ठसामर्थ्येनैवेत्युत्प्रेक्षा । तया दमयन्त्या नैषधं नलं विनिर्जेतुमियेष इच्छति स्म । रन्ध्रान्वेषिणो हि विद्वेषिण इति भावः । एतेन रागोद्गम उक्तः ॥ ४३ ॥

**अकारि तेन श्रवणातिथिर्गुणः क्षमाभुजा भीमनृपात्मजाश्रयः ।**
**तदुच्चधैर्यव्ययसंहितेषुणा स्मरेण च स्वात्मशरासनाश्रयः ॥४४॥**

अकारीति ॥ तेन क्षमाभुजा नलेन भीमनृपात्मजाश्रयो दमयन्त्याश्रयः तदीय इत्यर्थः । गुणः सौन्दर्यादिः श्रवणातिथिः श्रोत्रविषयोऽकारि कृतः । श्रुत इत्यर्थः "करोतेः कर्मणि लुङ्" । तस्य नलस्य उच्चधैर्यव्ययायोद्धतधैर्यनाशाय । संहितेषुणा स्मरेण च स्वात्मनः स्वस्य शरासनाश्रयः चापनिष्ठो गुणोमौर्वी श्रवणातिथिरकारि । आकर्णं कृष्ट इत्यर्थः । दमयन्तीगुणश्रवणान्नलमनसि महान्मदनविकारः प्रादुर्भूत इत्यर्थः । अत्रोत्तरवाक्या-

अत्रोत्प्रेक्षालङ्कारः ॥ ४३ ॥

र्थस्य पूर्ववाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

**अमुष्य धीरस्य जयाय साहसी शरासनज्यां विशिखैस्सनाथयन् ।**
**निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥**

अमुष्येति ॥ स्मरः साहसी सन् । 'न साहसमनारुह्य नरो भद्राणि पश्यति' इति न्यायावलम्बी सन्नित्यर्थः । धीरस्य दुर्जयस्यामुष्य नलस्य, जयाय शरासनज्यां निजधनुर्मौर्वीं विशिखैः बाणैः सनाथयन् सनाथं कुर्वन्, संयोजयन्नित्यर्थः । तदा तस्मिन् समये त्रयाणां लोकानां समाहारस्त्रिलोकी । "तद्धितार्थ"इत्यादिना समासः । "अकारान्तरोत्तरपदो द्विगुः स्त्रियां भाष्यः' इति स्त्रीलिङ्गत्वात् द्विगोरिति ङीप् । तस्याः विजयेन अर्जितानि सम्पादितान्यपि यशांसि संशये निमज्जयामास खलु । किं पुनः सम्प्रति सम्पाद्यमित्यपिशब्दार्थः । वृद्ध्यपेक्षया अनुचितकर्मारम्भे मूलमपि नश्येदिति संदिदेहेत्यर्थः । अत्र स्मरस्योक्तसंशयासम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

**अनेन भैमीं घटयिष्यतस्तथा विधेरवन्ध्येच्छतया व्यलासि तत् ।**
**अभेदि तत्तादृगनङ्गमार्गणैर्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥४६॥**

अथ दैवसहायात् पुष्पेषोरेव पुरुषकारः फलित इत्याह—अनेनेति ॥ अनेन नलेन सह भैमीं घटयिष्यतो विधेर्विधातुः अवन्ध्येच्छतया अमोघसङ्कल्पत्वेन । तत् तस्मात् । तथा तेन प्रकारेण । योऽग्रे वक्ष्यत इति भावः व्यलासि विलसितम् । "लसतेर्भावे लुङ् ।" विधिसङ्कल्पः तथा विललासेत्यर्थः । यत् यस्मात् तत्प्रसिद्धम्, तादृक् तथा अभेद्यमित्यर्थः । अस्य नलस्य धैर्यमेव कञ्चुकं पौष्पैः पुष्पमयैरपि । तत्राप्यङ्गस्य शरीरस्य मार्गणैरभेदि भिन्नम् । "भिदेः कर्मणि लुङ्" दमयन्तीनलयोर्दाम्पत्यघटनाङ्गबाणैर्नलकञ्चुकभेदनाद्विधेरप्यवन्ध्येच्छत्वं विज्ञायत इत्यर्थः । दैवानुकूल्ये किं केन दुष्करमिति भावः । अत्रानङ्गेन पुष्पैः कञ्चुकं भिन्नमिति विरोधः । तस्य विधि-

---

अत्र "स्वात्मशरासनाश्रयः" इति पुनरुक्ताभासोऽलङ्कारः । तुल्ययोगितालङ्कारश्चेत्यनयोः संसृष्टिः ॥ ४४ ॥

विलासेनाभासीकरणाद्विरोधाभासोऽलङ्कारः । स च धैर्यकञ्चुकमिति रूपकोत्थापित इति तयोरङ्गाङ्गिभावेन सङ्करः ॥ ४६ ॥

**किमन्यदद्यापि यदस्त्रतापितः पितामहो वारिजमाश्रयत्यहो ।**
**स्मरं तनुच्छायतया तमात्मनः शशाक शङ्के स न लङ्घितुं नलः ॥**

अथ विधिमपि जिग्युषः किं विध्यपेक्षयेत्याशयेनाह—किमिति ॥ किमन्यत् अन्यत्किमुच्यते । पितामहो विधिर्यस्य स्मरस्यास्त्रैस्तापितः । अद्यापि वारिजमाश्रयति । तस्य पद्मासनत्वादिति तत्त्वम् । शिशिरोपचारश्च गम्यते । अहो विधेरपि स्मरविधेयत्वमित्याश्चर्यम् । तं पितामहतापिनं स्मरं नलः आत्मनः तनोः छायेव छाया कान्तिर्यस्य तस्य भावस्तत्ता तया तनुच्छायतया । तनोः छाया अनातपः तनुच्छायम् । तत्तयेति च गम्यते । 'छाया त्वनातपे कान्तौ' इति वैजयन्ती । लङ्घितुं न शशाकेति शङ्के । न हि स्वच्छाया लङ्घितुं शक्येति भावः । अत्र स्मरलङ्घने पितामहोऽप्यशक्तः । किमुत नल इत्यर्थापत्तिस्तावदेकोऽलङ्कारः । तनोः छायेव छायेत्युपमा । छाययोरभेदाध्यवसायादतिशयोक्तिः एतत् त्रितयोपजीवनेनालङ्घ्यत्वे तनुच्छायतया हेतुत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा तत्सङ्कीर्णा । सा च शङ्क इति व्यञ्जकप्रयोगाद्वाच्येति ॥ ४७ ॥

**उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयःकृतेन किम् ।**
**त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ॥ ४८**

उरोभुवेति । सा तन्वी भैमी । त्रपैव सरिद्दुर्गं नलसम्बन्धि तदपि प्रतीर्य नलस्य हृदये विवेशेति यत् । तत्प्रवेशनं यत्तदोर्नित्यसम्बन्धात् । वयःकृतेन नवोपहारेण नूतननिर्माणेन । उरोभुवा तज्जन्येन तत्स्थानकेन च । कुम्भयुगेन कुचयुगलाख्येनेति भावः । अत एव विषयनिगरणेन अभेदाध्यवसायादतिशयोक्तिः । 'न लोक' इत्यादिना कृद्योगे षष्ठीप्रति-

---

अत्र लुप्तोत्प्रेक्षेति नारायणः । अतिशयोक्तिरुत्प्रेक्षाश्लेषश्चेति विद्याधरः ॥ ४७ ॥

षेधात् कर्तरि तृतीया । 'नपुंसके भावेऽप्युपसंख्यानम्' इति षष्ठी तु शेषविवक्षायाम् । जृम्भितं जृम्भणं किमित्युत्प्रेक्षा । सा चोक्तातिशयमूलेति सङ्करः । दमयन्तीकुचकुम्भविभ्रमश्रवणान्नलस्त्रपां विहाय तस्यामासक्तचित्तोऽभूदित्यर्थः । एतेन मनस्सङ्ग उक्तः ॥ ४८ ॥

**अपह्नुवानस्य जनाय यन्निजामधीरतामस्य कृतं मनोभुवा ।**
**अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या च शशाङ्ककोमला॥**

अथास्य जागरावस्थामाह—अपह्नुवानस्येति ॥ निजामधीरतां चपलत्वं जनायापह्नुवानस्य अपलपतः । "श्लाघह्नुङ्स्था" इत्यादिना सम्प्रदानत्वात् चतुर्थी । अस्य नलस्य मनोभुवा कामेन यज्जागरप्रलापादिकं कृतं तत्सर्वं जागरदुःखस्य साक्षिणी "साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षाच्छब्दादिनिप्रत्यये ङीप् । शशाङ्केन कोमला रम्या निशा चाबोधि बुद्धम् । "दीपजने" त्यादिना च्लेश्चिणादेशः । तथा शशाङ्कवत्कोमला मृदुला शय्या चाबोधि । निशायां शय्यायां जागरणात्तयोस्तत्साक्षित्वमिति भावः ॥ ४९ ॥

**स्मरेषुतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत ।**
**त्यजन्त्यसूञ्शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥**

ननु किमनेन निर्बन्धेन याच्यतां भीमभूपतिर्दमयन्तीमित्याशङ्क्याह—स्मरेष्विति ॥ प्रभुः समर्थः स नलो भृशमत्यन्तं स्मरेषुतप्तोऽपि विदर्भराजं भीमभूपतिं तनयां नायाचत । "दुह्याच्" इत्यादिना द्विकर्मकत्वम् । तथा हि मानिनोऽभिमानवन्तः । असून् शर्म सुखं च त्यजन्ति । वरं मनाक्प्रियं एकमद्वितीयं अयाचितव्रतं तु न त्यजन्ति । मानिनां प्राणत्यागदुःखाद्दुस्सहं याञ्चादुःखमिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

---

अत्राप्युत्प्रेक्षेति नारायणः । उत्प्रेक्षा, रूपकं, श्लेषश्चेति विद्याधरः ।४८।
अत्र श्लेषालङ्कार इति विद्याधरः ॥ ४९ ॥

**मृषाविषादाभिनयादयं क्वचिज्जुगोप निःश्वासततिं वियोगजाम् ।**
**विलेपनस्याधिकचन्द्रभागताविभावनाच्चापललाप पाण्डुताम् ॥**

मृषेति ॥ अयं नलः, क्वचित् कदाचित्, वियोगजां दमयन्तीविरहजां, निःश्वासपरम्परां, वस्त्वन्तरे मृषाविषादाभिनयान्मिथ्याभूतदुःखप्रकटनाज्जुगोप प्रियाविरहसन्तापसम्भूतं दीर्घनिश्वासम् आरोपितमनःपीडाव्यक्तीकरणादाच्छादयामासेत्यर्थः । किञ्च पाण्डुतां सन्ततकान्तासमुत्पन्नं वर्ष्मश्वैत्यं च, विलेपनस्य चन्दनस्य, अधिकचन्द्रभागताविभावनादधिको बहुलश्चन्द्रभागः कर्पूरांशो यस्मिन् सोऽधिकचन्द्रभागस्तस्य भावस्तत्ता । 'अथ कर्पूरमस्त्रियाम्' । घनसारश्चन्द्रसंज्ञः' इत्यमरः । तस्याः विभावनादारोपणात् अपललाप शरीरवैवर्ण्यं द्रष्टृनपि चन्दने घनसाराधिक्यव्याजेन प्रतारयामासेत्यर्थः । कर्पूरस्यातिशैत्यात्तदाधिक्ये शरीररक्तं शुष्कीभवतीति प्रसिद्धेः । अत्र प्रत्यक्षसिद्धयोर्निःश्वासपाण्डुतयोरपह्नोतुमशक्यत्वात् उभयस्यापि विरहजन्यत्वमपलप्य तयोर्दुःखकर्पूराधिकत्वारोपादपह्नवप्रभेदः ॥ ५१ ॥

**शशाक निह्नोतुमयेन तत्प्रियामयं बभाषे यदलीकवीक्षिताम् ।**
**समाज एवालपितासु वैणिकैर्मुमूर्च्छ यत्पञ्चममूर्छनास्वपि ५२॥**

शशाकेति ॥ अयं नलः अलीकवीक्षितां भ्रान्तिदृष्टां प्रियां भैमीं बभाषे भाषितवानिति यत् । तथा समाजे सभायामेव, वीणा शिल्पमेषां तैः वैणिकैः । "शिल्पम्" इति ठक् । आलपितासु उच्चरितासु, व्यक्तिं गतास्वित्यर्थः । रागव्यञ्जनमालप्तिरिति लक्षणम् । पञ्चमाख्यस्वरस्य । मूर्छनासु आरोहणावरोहणेषु । "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्छनेत्युच्यते" इति लक्षणात् । पञ्चमग्रहणं तस्य कोकिलालापकोमलत्वेनोद्दीपकत्वातिशयविवक्षयेत्यनुसन्धेयम् । मुमूर्च्छेत्यपि यत् । तदुभयम् ।

अत्र भैमीविरहजनितनिश्वाससन्ततेः मृषाविषादाभिनयेन तथा मदनजनितपाण्डुताया विलेपनस्य अधिकचन्द्रभागताप्रतिपादनेन निगूहनाद् व्याजोक्तिः ॥ ५१ ॥

निह्नोतुम् आच्छादयितुं न शशाक । अये इति विषादे हन्तेत्यर्थः । 'अये क्रोधे विषादे च' इति विश्वः । एतेन ह्रीत्यागोन्मादमूर्छावस्थाः सूचिताः ॥ ५२ ॥

**अवाप सापत्रपतां महीपतिर्जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।**
**असंवरे शम्बरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥**

**अवापेति** ॥ जितेन्द्रियाणां धुर्यग्रे कीर्तितस्थितिः ख्यातप्रतिष्ठः महीपतिर्नलः, असंवरे संवरणरहिते, संवरीतुमशक्य इत्यर्थः । "गृहवृधृनिश्चिगमश्च" इत्यप्रत्ययः । शम्बरवैरिविक्रमे मन्मथविकारे तत्र समाजे क्रमेण स्फुटतामुपेयुषि प्रकाशतां गते सति, सापत्रपतां सत्रपत्वम् अवाप । धैर्यशालिनां तद्भङ्गस्त्रपाकर इति भावः ॥ ५३ ॥

**अलं नलं रोद्धुमिदं किलाभवन् गुणा विवेकप्रमुखा न चापलम् ।**
**स्मरः स्म रत्यामनिरुद्धमेव यत्सृजत्ययं सर्गनिसर्ग ईदृशः ॥५४॥**

ननु विवेकिनः कुत इदं चापलमित्यत आह—**अलमिति** । युक्तायुक्तविचारो विवेकः । तत्प्रमुखाः गुणाः धैर्यादयः नलम् । इदं स्त्रीलौल्यरूपम् चापलं रोद्धुम् । "दुह्याच्" इत्यादिना रुधेर्द्विकर्मकत्वम् । अलं समर्थाः नाभवन् किल खलु । तथा हि—स्मरः, कामः, जनमिति शेषः । रत्यां रागे, अनिरुद्धम्, सृजति अनीश्वरमवशं करोति । रत्यां रतिदेव्याम् । अनिरुद्धाख्यं कुमारं सृजतीति ध्वनिः । इति यत् । अयं सर्गनिसर्गः सृष्टिप्रभावः ईदृशः स्म । 'रतिः स्मरप्रियायाञ्च रागेऽपि सुरतेऽपि च । अनिरुद्ध उषानाथे चारे चानीश्वरेऽपि च' इति विश्वः । अत्र स्मररागदुर्वारतायाः सर्वसृष्टिसाधारण्येन नलचापलदुर्वारतासमर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५४ ॥

---

अत्र छेकानुप्रासालङ्कारः ॥ ५३ ॥

अत्रोत्प्रेक्षाहेत्वलङ्काराविति विद्याधरः ॥ ५४ ॥

**अनङ्गचिह्नं स विना शशाक नो यदासितुं संसदि यत्नवानपि ।**
**क्षणं तदारामविहारकैतवान्निषेवितुं देशमियेष नैषधः ॥ ५५ ॥**

अथास्य मनोरथसिद्ध्यौपयिकं दिव्यहंससंवादनिदानभूतं वनविहारं प्रस्तौति —**अनङ्गेति** । नैषधो नलः, यत्नवानपि । अनङ्गचिह्नं मूर्छाप्रलापादिस्मरविकारं विना । संसदि क्षणमप्यासितुं यदा नो शशाक । तदा आरामविहारकैतवात् उपवनविहरणव्याजात् । देशं निषेवितुमियेष देशाद्देशान्तरं गन्तुमैच्छदित्यर्थः । एतेन चापलाख्यसञ्चारी भ्रमलक्षण उक्तः ॥ ५५ ॥

**अथ श्रिया भर्त्सितमत्स्यकेतनस्समं वयस्यैस्स्वरहस्यवेदिभिः ।**
**पुरोपकण्ठोपवनं किलेक्षिता दिदेश यानाय निदेशकारिणः ॥५६॥**

**अथेति** ॥ अथेच्छानन्तरं श्रिया सौन्दर्येण, भर्त्सितमत्स्यकेतनः तिरस्कृतस्मरो नलः, स्वरहस्यवेदिभिः । निजभैमीरागमर्मज्ञैः । वयसा तुल्याः वयस्याः स्निग्धाः । 'स्निग्धो वयस्यस्सवयाः' इत्यमरः । तैः समं सह । पुरोपकण्ठोपवनं पुरसमीपारामम् । ईक्षिता द्रष्टा, तृन्नन्तमेतत् । अत एव 'न लोक' इत्यादिना षष्ठीप्रतिषेधः । किलेत्यलीके । निदेशकारिणः आज्ञाकरान् । यानाय वाहनाय । यानमानेतुमित्यर्थः । "क्रियार्थ" इत्यादिना चतुर्थी । दिदेश आज्ञापयामास ॥ ५६ ॥

**अमी ततस्तस्य विभूषितं सितं जवेऽपि मानेऽपि च पौरुषाधिकम् ।**
**उपाहरन्नश्वमजस्रचञ्चलैः खुराञ्चलैः क्षोदितमन्दुरोदरम् ॥ ५७ ॥**

**अमीति** ॥ ततः आज्ञापनानन्तरम् । अमी निदेशकारिणः । तस्य नलस्य । विभूषितम् अलंकृतम् । जवे वेगेऽपि माने प्रमाणेऽपि च । पौरुषात् पुरुषगतिवेगात्, पुरुषप्रमाणाच्च अधिकम् । 'ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ' इत्यमरः । " पुरुषहस्तिभ्यामण् च " इत्यण् । अजस्रं

---

अत्रापह्नुत्यलङ्कारः ॥ ५५ ॥

अत्रोपमासहोक्तिरिति विद्याधरः ॥ ५६ ॥

चञ्चलैः चटुलस्वभावैः । खुराञ्चलैः शफाग्रैः । क्षोदितमन्दुरोदरं चूर्णितशालाभ्यन्तरम् । 'वाजिशाला तु मन्दुरा' इत्यमरः । एतच्चोत्तमाश्वलक्षणं । सितं श्वेतम् अश्वम्, उपाहरन् आनिन्युरित्यर्थः ॥ ५७ ॥

अथान्तरेणावटुगामिनाध्वना निशीथिनीनाथमहस्सहोदरैः ।
निगालगाद्देवमणेरिवोत्थितैर्विराजितं केसरकेशरश्मिभिः ॥५८॥

अथ सप्तभिः कुलकमाह—अथेति ॥ अथानयनानन्तरं स नलः । हयमारुरोहेत्युत्तरेणान्वयः । कथंभूतम् । अन्तरेणाभ्यन्तरेण । अवटुगामिना कृकाटिकाख्यमस्तकपृष्ठभाजा । 'अवटुर्घाटा कृकाटिका' इत्यमरः । अध्वना मार्गेण, निगालगात् गलोद्देशगतात् । 'निगालस्तु गलोद्देशः' इत्यमरः । देवमणिरावर्तविशेषः । "निगालजो देवमणिः" इति लक्षणात् । दिव्यमाणिक्यञ्च गम्यते । तस्मादुत्थितैरिवेत्युत्प्रेक्षा । निशीथिनीनाथमहस्सहोदरैः चन्द्रांशुसदृशैरित्युपमा केसरकेशा एव रश्मय इति रूपकम् । तैर्विराजितम् ॥ ५८ ॥

अजस्रभूमीतटकुट्टनोद्गतैरुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥५९॥

अजस्रेति ॥ अजस्रेण भूमीतटकुट्टनेन, उद्गतैरुत्थितैः रेणुभिः । रयप्रकर्षस्य वेगातिशयस्य । अध्ययनार्थमभ्यासाय । आगतैः । अणिमाङ्कितैरणुत्वपरिमाणविशिष्टैः जनस्य लोकस्य चेतोभिरिवेत्युत्प्रेक्षा । चरणेषु पादेषु उपास्यमानम् । अणुपरिमाणं मन इति तार्किकाः ॥ ५९ ॥

चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं स्वयं हयस्येव च मौनमास्थितम् ।

चलाचलेति ॥ पुनः चलाचलप्रोथतया स्वभावतः स्फुरमाणघोणतया ।

अत्र छेकानुप्रासः ॥ ५७ ॥

अत्रानुप्रासोत्प्रेक्षारूपकालङ्काराणां सङ्करः ॥ ५८ ॥

अत्रोत्प्रेक्षेति नारायणः । उत्प्रेक्षा जातिश्चेति विद्याधरः ॥ ५९ ॥

चरिचलिपदानामुपसंख्यानाच्चलेर्द्विवचनम्, दीर्घश्च । 'घोणा तु प्रोथ-मस्त्रियाम् ' इत्यमरः । महीभृते नलाय । स्ववेगदर्पान् । वेगातिरेकान् वक्तुम् उत्सुकमुद्युक्तमिवेत्युत्प्रेक्षा। अथाप्यवचने हेतुमुत्प्रेक्षते—अलमिति । गिरा उक्त्या अलम् । कुतः । अयं नलः । स्वयम् । हयस्याश्वस्य । आशयमभिप्रायम् । वेद वेत्ति किल । " विदो लटो वा " इति णलादेशः । इति हेतोरिवेत्यनुषङ्गः । मौनं तूष्णींभावं च आस्थितं प्राप्तम् । अश्वहृदयवेदी नल इति प्रसिद्धिः ॥ ६० ॥

महारथस्याध्वनि चक्रवर्तिनः परानपेक्षोद्वहनाद्यशस्सितम् ।
रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्वतां रवेः ॥ ६१ ॥

**महारथस्येति** ॥ महान् रथो यस्य तस्य महारथस्य । "आत्मानं सारथिं चाश्वान् रक्षन्युध्येत यो नरः । स महारथसंज्ञस्स्यादित्याहुर्नीतिकोविदः" इत्युक्तलक्षणस्य रथिकविशेषस्येत्यर्थः, अन्यत्र महतो रथस्य । चक्रं राष्ट्रं वर्तयतीति चक्रवर्ती सार्वभौमः । तस्य नलस्य । "हरिश्चन्द्रो नलो राजा" इत्युक्तलक्षणात् । अन्यत्र चक्रेणैकेन वर्तनशीलस्येत्यर्थः । अध्वनि मार्गे नापेक्षत इत्यनपेक्षम् । "पचाद्यच्" । परेषामनपेक्षम् । तस्मादुद्वहना-दसहायोद्वहनाद्धेतोः यशस्सितं कीर्तिविशदम् । अत एव अनीदृशाम् ईदृग्य-शोरहितानाम् । "सप्त युञ्जन्ति रथमेकचक्रम्" इति सप्तानां सम्भूयोद्वहन-श्रवणादिति भावः । रवेः अर्वतामश्वानाम् अन्तर्बलम् अन्तस्सारम् । रदानां दन्तानां ये अवदाताः सिताः अंशवः तेषां मिषात् हसन्तमिव स्थित-मित्यर्थः । अत्र मिषशब्देन अंशूनामसत्यत्वमापाद्य हासत्वोत्प्रेक्षणात्सापह्न-वोत्प्रेक्षा । इयं गम्या च व्यञ्जकाप्रयोगात् । ' रदना दशना दन्ता रदा ' इत्यमरः ॥ ६१ ॥

---

अत्र सापह्नवोत्प्रेक्षेति विद्याधरः ॥ ६० ॥

अत्र छेकानुप्रासः । अपह्नव-व्यतिरेक-श्लेषालङ्काराणां सङ्कर इति विद्याधरः ॥ ६१ ॥

सितत्विषश्चञ्चलतामुपेयुषो मिषेण पुच्छस्य च केसरस्य च ।
स्फुटाश्चलच्चामरयुग्मचिह्नकैरनिह्नुवानं निजवाजिराजताम् ॥ ६२॥

सितत्विष इति ॥ पुनः सितत्विषः विशदप्रभस्य चञ्चलतामुपेयुषः, चञ्चलस्येत्यर्थः । पुच्छस्य च केसरस्य सटासमूहस्य च मिषेण चलतश्चामरयुग्मस्य । चिह्नकैर्लक्षणैः स्फुटां प्रसिद्धां निजां वाजिराजताम् । अश्वेश्वरत्वम् । अनिह्नुवानम्, प्रकाशयन्तमिवेत्यर्थः । अराज्ञः कथं चामरयुग्ममिति भावः । पूर्ववदलङ्कारः ॥ ६२ ॥

अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवल्गया ।
उपेयिवांसं प्रतिमल्लतां रयस्मये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥

अपीति ॥ पुनः रयस्मये वेगप्रयुक्ताहङ्कारे प्रसभं प्रसह्य जितस्य प्रागेव निर्जितस्य गरुत्मतः । मुखानुषक्ता वक्त्रलग्ना आयता दीर्घा वल्गू रम्या च या वल्गा मुखे रज्जुः । तया तन्मिषेणेत्यर्थः द्विजिह्वाभ्यवहारपौरुषे सर्पभक्षणपुरुषकारेऽपि, प्रतिमल्लतां प्रतिभटत्वम् । उपेयिवांसं प्राप्तमिवेत्यर्थः । तथा च गम्योत्प्रेक्षेयम् । "उपेयिवाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तो निपातः ॥ ६३ ॥

स सिन्धुजं शीतमहस्सहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
जिताखिलक्ष्माभृदनल्पलोचनस्तमारुरोह क्षितिपाकशासनः ॥६४॥

स इति ॥ जिताः अखिलाः, क्ष्माभृतो भूपाः भूधराश्च येन सः । अनल्पलोचनो विशालाक्षः । अन्यत्र बहुनेत्रस्सहस्राक्ष इति यावत् । सः क्षितिपाकशासनः क्षितीन्द्रो नलः । देवेन्द्रश्च । सिन्धुजं सिन्धुदेशोद्भवं, समुद्रोद्भवञ्च । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्, इत्यमरः । शीतमहस्सहोदरम् । चन्द्रसवर्णमित्यर्थः । अन्यत्र चन्द्रभ्रातरम् । एकयोनित्वादिति भावः । उच्चैःश्रवसः इन्द्राश्वस्य श्रियं हरन्तम् । ततसरूपमित्यर्थः।

---

अत्र सापह्नवोत्प्रेक्षेति नारायण विद्याधरौ ॥ ६२ ॥

अत्र सापह्नवोपमेति विद्याधरः ॥ ६३ ॥

तं हयम् आरुरोह । अत्रोच्चैश्श्रवसः श्रियं हरन्तमित्युपमा । सा च श्लिष्ट-विशेषणात् श्लेषसङ्कीर्णा । क्षितिपाकशासन इत्यतिशयोक्तिः ॥ ६४ ॥

**निजा मयूखा इव तिग्मदीधितिं स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।**
**तमश्ववारा जवनाश्वयायिनं प्रकाशरूपा मनुजेशमन्वयुः ॥६५॥**

निजा इति ॥ निजा आत्मीयाः, प्रकाशरूपा उज्ज्वलाकाराः, भास्वद्रूपाश्च । अश्वान् वारयन्तीत्यश्ववाराः अश्वारोहाः । स्फुटारविन्दाङ्कित-पाणिपङ्कजम् पद्मरेखाङ्कितहस्तम् । अन्यत्र पद्महस्तम् । जवनो जवशीलः । "युचंक्रम" इत्यादिना युच् । तेनाश्वेन । अन्यत्र तैरश्वैर्यातीति तथोक्तम् । मनुजाः मनोर्जाता नरा राजानश्च । तेषामीशं तं नलं तिग्मदीधितिं सूर्यम् । मयूखा इव अन्वयुः अन्वगच्छन् । यातेर्लिट् । झेर्जुसादेशः ॥ ६५ ॥

**चलन्नलंकृत्य महारयं हयं स वाहवाहोचितवेषपेशलः ।**
**प्रमोदनिष्पन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगरालयैर्नलः ॥६६॥**

चलन्निति ॥ वाहवाहोचितवेषपेशलः अश्ववाहोचितनेपथ्यचारुः । 'चारौ दक्षे च पेशलः ' इत्यमरः । स नलः महारयं जवनं हयम् । अलंकृत्य चलन् । स्वयं हयस्य भूषणीभूय गच्छन्नित्यर्थः । प्रमोदेन ' निष्पन्दतराणि अत्यन्तनिश्चलानि अक्षिपक्ष्माणि, येषां तैरनिमेषदृष्टिभिरित्यर्थः । नगरालयैर्नगरनिवासिभिः,लोकैर्जनैर्व्यलोकि विस्मयहर्षाभ्यां विलोकित इत्यर्थः । वृत्त्यनुप्रासोऽलङ्कारः ॥ ६६ ॥

**क्षणादथैष क्षणदापतिप्रभः प्रभञ्जनाध्येयजवेन वाजिना ।**
**सहैव ताभिर्जनदृष्टिवृष्टिभिर्बहिः पुरोऽभूत् पुरुहूतपौरुषः ॥६७॥**

क्षणादिति ॥ अथ क्षणदापतिप्रभः चन्द्रद्युतिः, पुरुहूतपौरुषः इन्द्र-पराक्रमः, एष नलः । प्रभञ्जनाध्येयजवेन वायुनाभ्यसनीयवेगेन, ततोऽप्यधि-

---

अत्रोपमापरिकरश्लेषालङ्कारा इति विद्याधरः ॥ ६४ ॥
अत्रोपमाश्लेषरूपकमिति विद्याधरः ॥ ६५ ॥
अत्र छेकानुप्रासः ॥ ६६ ॥

शल्यपल्लवानि तोमराग्राणि याभ्यां ते तथोक्ते। 'शल्यं तु तोमरः' इत्यमरः। नलस्य नासीरगते सेनाप्रवर्तिनि। 'सेनामुखं तु नासीरम्' इत्यमरः। सादिबले तौरङ्गिकसैन्ये। कुतूहलान्मृषा मृधं मिथ्यायुद्धम्, युद्धनाटकमित्यर्थः। वितेनतुः चक्रतुः ॥ ६८ ॥

प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम्।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुत्थितं रजः ॥ ६९ ॥

प्रयातुमिति ॥ इयं धरा भूः समुद्रातिरिक्तेति भावः। अस्माकं प्रयातुम्प्रस्थातुम्। कियत्पदं गन्तव्यस्थानम्, न किञ्चित्पर्याप्तमित्यर्थः। तत तस्मात् अम्भोधिरपि। स्थलवदाचरतु भूरेव भवत्वित्यर्थः। "अर्तुः क्यङ् सलोपश्च" इति क्यङ् प्रत्ययः। इतीव इति मत्वेव। इतिनैव गम्यमानार्थत्वादप्रयोगः। अन्यथा पौनरुक्त्यात्। क्रियानिमित्तोत्प्रेक्षा। निजवेगेन दर्पितैः सञ्जातदर्पैः, वाहैर्नलाश्वैः। पयोधिरोधक्षमं समुद्रच्छादनपर्याप्तम्। रज उत्थितम् उत्थापितं, तथा सान्द्रमिति भावः ॥ ६९ ॥

हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमणेऽपि तस्य नः।
त्रपा हरीणामिति नम्रितानैर्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥ ७० ॥

हरेरिति ॥ यत् खम् आकाशम्। हरेरेककेन एकाकिना। "एकादाकिनीच्चासहाये" इति चकारात् कन्प्रत्ययः। पदा पादेन। 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। "पद्दन्" इत्यादिना पदादेशः। अक्रामि अलंघि। तस्य खस्य। चतुर्भिः पादैः क्रमणे लंघने, कृते सत्यपीति शेषः। हरीणां वाजिनां, विष्णूनां चेति गम्यते। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। नोऽस्माकं त्रपा इतीवेत्यर्थः। गम्यार्थत्वादिवशब्दस्याप्रयोगः। अत एव गम्योत्प्रेक्षा। नम्रितानि नम्रीकृतानि आननानि यैस्तैः हरिभिः। अर्धे नभसि कृतक्रमैः कृतलंघनैः सद्भिः। न्यवर्ति निवर्तितम्। यदन्येन पुंसा लघूपायेन साधितं तस्य गुरूपायेन करणं समानस्य लाघवाय भवेदिति भावः। एतेन प्लुतगतिरुक्ता तत्र गगनलंघनस्य सम्भवादिति ॥ ७० ॥

चमूचरास्तस्य नृपस्य सादिनो जिनोक्तिषु श्राद्धतयेव सैन्धवाः ।
विहारदेशं तमवाप्य मण्डलीमकारयन् भूरि तुरङ्गमानपि ॥७१॥

चमूचरा इति ॥ तस्य नृपस्य, चमूचराः । सेनाचराः । "चरेष्टच्" । सिन्धुदेशभवाः सैन्धवाः, अश्वाः । 'हयसैन्धवसप्तयः' इत्यमरः । "तत्रभवः" इत्यण् । तत्सम्बन्धिनोऽपि सैन्धवः । "तस्येदम्" इत्यण् । ते सादिनोऽश्वसादिन इत्यर्थः । जिनोक्तिषु श्राद्धतयेव । जैनदर्शनश्रद्धालुतयेवेत्युत्प्रेक्षा । "श्रद्धार्चावृत्तिभ्योऽण्" इति मत्वर्थीयोऽण्प्रत्ययः । तं विहारदेशं सञ्चारभूमिं, सुगतालयञ्च । 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति विश्वः । अवाप्य तुरङ्गमान् भूरि बहुलं मण्डलीमपि, मण्डलाकारञ्च । अकारयन् । अपिशब्दोऽवाप्तिसमुच्चयार्थः । अन्यत्र मण्डली मण्डलासनमित्यर्थः । बौद्धाः स्वकर्मानुष्ठाने प्रायेण मण्डलासनं कुर्वन्तीति प्रसिद्धिः ॥ ७१ ॥

द्विषद्भिरेवास्य विलंघिता दिशो यशोभिरेवाब्धिरकारि गोष्पदम् ।
इतीव धारामवधीर्य मण्डलीक्रियाश्रियामण्डि तुरङ्गमैः स्थली ७२

द्विषद्भिरिति ॥ अस्य नलस्य द्विषद्भिरेव, पलायमानैरिति भावः । दिशो लंघिता अस्य यशोभिरेवाब्धिः । गोः पदं गोष्पदमकारि गोष्पदमात्रं कृतः । "गोष्पदं सेवितासेवितप्रमाणेषु" इति सुडागमषत्वयोर्निपातः । इतीव इति मत्वेवेत्युत्प्रेक्षा । अन्यसाधारणं कर्म नोत्कर्षाय भवेदिति भावः । तुरङ्गमैर्धारां गतिम् । जातावेकवचनम् । पञ्चापि धारा इत्यर्थः । "आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्चधाराः" इत्यमरः । अवधीर्यानादृत्य । मण्डलीक्रियाश्रिया अर्धप्लुतायितमण्डलीकरणलक्ष्म्या, मण्डलगत्यैवेत्यर्थः । स्थली कृत्रिमभूमिः । 'जानपद' इत्यादिना कृत्रिमार्थे ङीप् । अमण्डि अभूषि । 'मडि भूषणे' इति धातोर्ण्यन्तात्कर्मणि लुङ् । इदित्वान्नुमागमः ॥ ७२ ॥

अचीकरच्चारु हयेन या भ्रमीर्निजातपत्रस्य तलस्थले नलः ।
मरुत् किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचंक्रमान् ॥

अचीकरादिति ॥ नलः चारु यथा तथा । हयेन प्रयोज्यकर्त्रा निजातपत्रस्य तलस्थले अधःप्रदेशे । 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः । याः अमीः मण्डलगतीः । अचीकरत् कारितवान् । "करोतेर्णौ चङ्" । तासु अमिषु विषये मरुद्यापि वातानां समूहाः वात्याः । "पाशादिभ्यो यः" । अत्र तद्भ्रमयो लक्ष्यन्ते—तन्मयान् तद्रूपान् । चक्रचंक्रमान् मण्डलगतीः । वितत्य विस्तीर्य । न शिक्षते किं नाभ्यस्यते किमित्युत्प्रेक्षा । शिक्षितश्चेत् तथा सोऽपि गतिं कुर्यादिति भावः । वायोरप्यसम्भाविता गतीरचीकरदिति भावः ॥ ७३ ॥

विवेश गत्वा स विलासकाननं ततः क्षणात् क्षोणिपतिर्धृतीच्छया ।
प्रवालरागच्छुरितं सुषुप्सया हरिर्घनच्छायमिवाम्भसां निधिम् ॥

विवेशेति ॥ ततः सः क्षोणिपतिः क्षणात् गत्वा धृतीच्छया सन्तोषकांक्षया । प्रवालाः पल्लवाः, अन्यत्र विद्रुमाः । 'प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे' इत्यमरः । तेषां रागेणारुण्येन । छुरितं रूषितम् । घनच्छायं सान्द्रानातपम्, अन्यत्र मेघकान्तिम् । 'छाया त्वनातपे कान्तौ' इति विश्वः । विलासकाननं क्रीडावनम् । अन्यत्र बवयोरभेदात् । बिलासकानां बिलेशयानां सर्पाणाम् । आननं प्राणनम् । सुषुप्सया स्वप्तुमिच्छया, हरिर्विष्णुः । अम्भसां निधिमब्धिमिव विवेश ॥ ७४ ॥

वनान्तपर्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्णदृक्पथे ।
न्यवर्ति दृष्टिप्रकरैः पुरौकसामनुव्रजद्बन्धुसमाजबन्धुभिः ॥७५॥

वनान्तेति ॥ अनुव्रजद्बन्धुसमाजबन्धुभिः स्नेहादनुगच्छद्बन्धुसंघसदृशैरित्यर्थः । अत एवोपमालङ्कारः । पुरौकसां दृष्टिप्रकरैः दृष्टिसमूहैः कर्तृभिः । वनान्तपर्यन्तं काननोपान्तसीमाम् । उदकप्रान्तञ्चेति गम्यते । 'वने सलिलकानने' इत्यमरः । सस्पृहं साभिलाषं यथा तथा उपेत्य गत्वा । क्रमेण तस्मिन् नले अवतीर्णदृक्पथे अतिक्रान्तदृष्टिविषये सति । न्यवर्ति निवृत्तम् । भावे लुङ् । यथा बन्धुभिरोदकात् प्रियं पान्थमनुव्रजेदित्यागमात् प्रवसन्तमनुव्रज्य निवर्त्यते तद्वदित्यर्थः ॥ ७५ ॥

ततः प्रसूने च फले च मञ्जुले स सम्मुखीनांगुलिना जनाधिपः ।
निवेद्यमानं वनपालपाणिना व्यलोकयत्काननरामणीयकम् ॥७६॥

तत इति ॥ ततो वनप्रवेशानन्तरं स जनाधिपो नलः । मञ्जुले मनोज्ञे, प्रसूने पुष्पे, फले च । सम्मुखीना सन्दर्शिनी, सम्मुखावस्थितवस्तु-प्रकाशिकेति यावत् । "यथामुखसम्मुखस्य दर्शन" इति खप्रत्ययः । सा अंगुलिर्यस्य तेन । वनपालपाणिना निवेद्यमानम् इदमिदमित्यंगुल्या पुष्प-फलादिनिदर्शेन प्रदर्श्यमानमित्यर्थः । काननरामणीयकम् । "योपधाद्गुरू-पोत्तमाद्वुञ्" इति वुञ्प्रत्ययः । व्यलोकयदपश्यदिति स्वभावोक्तिः ॥७६॥

फलानि पुष्पाणि च पल्लवे करे वयोतिपातोद्गतवातवेपिते ।
स्थितैः समाधाय महर्षिवार्धकाद्वने तदातिथ्यमशिक्षि शाखिभिः ॥

फलानीति ॥ वयोतिपातेन पक्षिपातेन, बाल्याद्यपगमेन च । उद्गतेन उत्थितेन, वातेन वायुना, वातदोषेण च, वेपिते कम्पिते । 'खगबाल्यादिनो-र्वयः' इत्यमरः । पल्लव एव कर इति व्यस्तरूपकम् । फलानि पुष्पाणि च, समाधाय निधाय, स्थितैः तिष्ठद्भिः, वने शाखिभिर्वृक्षैः, वेदशाखाध्यायि-भिश्च । 'शाखा वेदप्रभेदे च, इति वैजयन्ती । तदातिथ्यं तस्य नलस्य आतिथ्यम्, अतिथ्यर्थं कर्म । "अतिथेर्ञ्यः" इति ञ्यप्रत्ययः । महर्षीणां वार्धकात् वृद्धसमूहात्, तत्र वृद्धमहर्षिसंघादित्यर्थः । शिवभागवतवत्स-मासः । वृद्धसंघे तु वार्धकम्' इत्यमरः । "वृद्धाच्चेति वक्तव्यम्" इति समूहार्थं वुञ्प्रत्ययः । अशिक्षि शिक्षितम् अभ्यस्तम् । अन्यथा कथमि-दमाचरितमिति भावः । कर्मणि लुङ् । उत्प्रेक्षेयम् । सा च व्यञ्जकाप्रयो-गाद्गम्या । पूर्वोक्तरूपकश्लेषाभ्यामुत्थापिता चेति सङ्करः ॥ ७७ ॥

विनिद्रपत्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् ।
दधानमाशासु चरिष्णु दुर्यशस्स कौतुकी तत्र ददर्श कैतकम् ॥

विनिद्रेति ॥ विनिद्रपत्रालिगतालिकैतवात् विकचदलावलिस्थित-भृङ्गमिषात्, मृगाङ्कचूडामणेरीश्वरस्य कर्तुः, वर्जनेन परिहारेण, आर्जितं

सम्पादितम् । "न कैतक्या सदाशिवम्" इति निषेधादिति भावः । आशासु, चरिष्णु सञ्चरणशीलम् । "अलंकृञ्" इत्यादिना चरतेरिष्णुच्प्रत्ययः । दुर्यशः अपकीर्तिम् । दधानं कैतकं केतकीकुसुमम् । तव वने, स नलः कौतुकी सन् ददर्श, अर्हस्य महापुरुषबहिष्कारो दुष्कीर्तिकर इति भावः । अत्र अलिकैतवादित्यलित्वापह्नवेन तेषु दुर्यशस्त्वारोपादपह्नवालङ्कारः । "निषेध्य विषयं साम्यादन्यारोपे ह्यपह्नवः" इति लक्षणात् ॥ ७८ ॥

**वियोगभाजां हृदि कण्टकैः कटुर्निधीयसे कर्णिशरः स्मरेण यत् ।**
**ततो दुराकर्षतया तदन्तकृद्विगीयसे मन्मथदेहदाहिना ॥ ७९ ॥**

अथ त्रिभिः कैतकोपालम्भमाह—वियोगेति ॥ हे कैतक, यद्यस्मात् त्वं स्मरेण वियोगभाजां हृदि, कण्टकैः निजतीक्ष्णावयवैः, कटुः तीक्ष्णः कैतकविशेषणस्यापि कर्णिशरत्वविशेषणविवक्षया पुल्लिङ्गनिर्देशः । किंतूद्देश्यविशेषणस्य विधेयविशेषणत्वं क्लिष्टम् । कर्णवत् कर्णि । प्रतिलोमशल्यं, तद्वान् शरः कर्णिशरस्सन् निधीयसे । कण्टककठोरकैतकस्य कर्णिशरत्वरूपणाद्रूपकालङ्कारः । ततः कर्णिशरत्वादेव दुराकर्षतया तदन्तकृत्तेषां वियोगिनां मारकं सत् । मन्मथदेहदाहिना स्मरहरेण, विगीयसे विगर्ह्यसे । द्वेष्यवद्द्वेष्योपकरणमपि असह्यमेव । तदपि हिंस्रञ्चेत्किमु वक्तव्यमिति भावः । अत्रेश्वरकर्तृकस्य केतकीविगानस्य तद्गतवियोगिहिंस्रताहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा । व्यञ्जकाप्रयोगाद्गम्या । सा चोक्तरूपकोत्थापितेति सङ्करः ॥ ७९ ॥

**त्वदग्रसूचीसचिवस्स कामिनोर्मनोभवस्सीव्यति दुर्यशःपटौ ।**
**स्फुटञ्च पत्रैः करपत्रमूर्तिभिर्वियोगिहृद्दारुणि दारुणायते ॥८०॥**

त्वदग्रसूचीति ॥ तव अग्राण्येव सूच्यः सचिवाः सहकारिणो यस्य स तथोक्तः, सः प्रसिद्धः मनोभवः । कामिनी च कामी च कामिनौ तयोः । "पुमान् स्त्रिया" इत्येकशेषः । दुर्यशसी । अधोरावित्यपकीर्ती एव पटाविति रूपकम् । सीव्यति कण्टकस्यूतं करोतीत्यर्थः । किं चेति चार्थः । करपत्रमूर्तिभिः क्रकचाकारैः । 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः । पत्रैः । वियोगिनां, हृद्येव दारुणि । दारयतीति दारुणः विदारकः छेत्ता । स

इवाचरतीति दारणायते । "कर्तुः क्यङ् सलोपश्च" इति क्यङन्ताल्लट् । दारणायत इत्युपमा । सा च हृद्दारुणीति रूपकानुप्राणितेति सङ्करः ॥ ८० ॥

धनुर्मधुस्विन्नकरोऽतिभीमजापरं परागैस्तव धूलिहस्तयन् ।
प्रसूनधन्वा शरसात्करोति मामिति क्रुधाक्रुश्यत तेन कैतकम् ॥

धनुरिति ॥ हे कैतक, प्रसूनं धनुर्यस्येति प्रसूनधन्वा पुष्पचापः । "वा संज्ञायाम्" इत्यनङादेशः । अत एव धनुषः मधुना मकरन्देन, स्विन्नकरः आर्द्रपाणिस्सन् । तव परागैः रजोभिः, धूलिहस्तयन् पुनःपुनः धूल्युद्धापितहस्तमात्मानं कुर्वन् । अन्यथा धनुःस्रंसनादिति भावः । "तत्करोति" इति ण्यन्ताल्लटश्शत्रादेशः । अतिभीमजापरं अत्यन्तदमयन्त्यासक्तं, माम्, शरसाच्छराधीनं करोति । "तदधीनवचन" इति सातिप्रत्ययः । अन्यथा स्रस्तचापस्सन् मां किं कुर्यादिति भावः । इतीत्थं श्लोकत्रयोक्तरीत्या तेन राज्ञा क्रुधा कैतकम्, आक्रुश्यत अपराधोद्घाटनेन अघोष्यतेत्यर्थः ॥ ८१ ॥

विदर्भसुभ्रूस्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहदधूपिनि द्रुमे ॥

विदर्भेति ॥ स नलः । 'तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया' इति शब्दार्णवे । दोहदं चासौ धूपश्च । तदुक्तम् 'मेषामिषाम्बुसंसेकस्तत्केशामिषधूपनम् । स्थेयानयं प्रयोगो हि दाडिमीफलवृद्धये ॥ मत्स्याज्यत्रिफलालेपैर्मांसैराजाविकोद्भवैः । लेपिता धूपिता सूते फलं तालीव दाडिमी ॥ आविक्काथेन संसिक्ता धूपिता तस्य लोमभिः । फलानि दाडिमी सूते सुबहूनि पृथूनि च ॥" इति । तद्वति दाडिमद्रुमे फलानि विदर्भसुभ्रुवो दमयन्त्याः स्तनयोर्या तुङ्गता । तदाप्तये तत्प्राप्तये । तादृगौन्नत्यलाभायेत्यर्थः । अलमत्यन्तं तपस्यतः तपश्चरतः । कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ्प्रत्यये, "तपसः परस्मैपदञ्च" इति परस्मैपदम् । धूमस्य दोहदधूमस्य धयन्तीति धयान् पातॄन् । अत्र "आतश्चोपसर्गे" इति उपसर्गग्रहणाननुवृत्तिवत् "पाघ्रा" इत्यादिना अनुपसृष्टाया अपि धेटश्शप्रत्यय इति गतिः । अत एव

काशिकायां 'केचिदुपसर्ग इति नानुवर्तयन्ति' इति । अधोमुखान् घटानिव । अपश्यदित्युत्प्रेक्षा । फलार्थिन उग्रं तपस्यन्तीति भावः ॥ ८२ ॥

**वियोगिनीमैक्षत दाडिमीमसौ प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् ।**
**फलस्तनस्थानविदीर्णरागिहृद्विशच्छुकास्यस्मरकिंशुकाशुगाम् ॥ ८३ ॥**

वियोगिनीमिति ॥ असौ नलः, प्रियस्मृतेः दयितस्मरणात्, स्पष्टं व्यक्तम् उदीतेति । "इण् गतौ" इति कर्तरि क्तः । उदीताः उद्गताः, कण्टकाः सावयवसूच्य एव । कण्टका रोमाञ्चा यस्यास्तामिति श्लिष्टरूपकम् । 'वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः' इति वैजयन्ती । फलान्येव स्तनौ, तावेव स्थानम् । तत्र विदीर्णः रागोऽस्यास्तीति रागि, रक्तवर्णमनुरक्तञ्च । यत्तस्मिन् हृदि, विशद्बीजभक्षणायान्तः प्रविशत् । शुकास्यं शुकतुण्डमेव । स्मरस्य, किंशुकं पलाशकुड्मलमेव आशुगो बाणो यस्यास्ताम् दाडिमीमेव, वियोगिनीं विरहिणीं, ऐक्षत अपश्यत् । रूपकालङ्कारः । विः पक्षी, तद्योगिनीमिति च गम्यते ॥ ८३ ॥

**स्मरार्धचन्द्रेषुनिभे क्रशीयसां स्फुटं पलाशेऽध्वजुषां पलाशनात् ।**
**स वृन्तमालोकत खण्डमन्वितं वियोगिहृत्खण्डिनि कालखण्डजम् ॥**

स्मरेति ॥ स नलः स्मरस्य योऽर्धचन्द्रः अर्धचन्द्राकारः, इषुः तन्निभे तत्सदृशे । नित्यसमासत्वादस्वपदविग्रहः । अत एवाह अमरः—"स्युरुत्तरपदे त्वमी ।" 'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इति । वियोगिनां हृत्खण्डिनि हृदयभेदिनि । क्रशीयसां कृशतराणाम् । अध्वजुषामध्वगामिनाम् । पलाशनान्मांसभक्षणाद्धेतोः पलाशे पलमश्नातीति व्युत्पत्त्या पलाशसंज्ञाभाजि किंशुककलिकायामित्यर्थः । अन्वितं सन्दृष्टं स्फुटम् । आलोकत आलोकितवान् । 'कालखण्डयकृती तु समे' इत्यमरः । तच्च दक्षिणपार्श्वस्थकृष्णवर्णमांसविशेषः ॥ ८४ ॥

**नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः ।**
**दृशा नृपेण स्मितशोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे ॥**

नवेति ॥ गन्धवहेन वायुना, चुम्बिता स्पृष्टा । अन्यत्र अनुलिप्तेन पुंसा वीक्षिता । मकरन्दशीकरैः पुष्परसकणैः, करम्बिताङ्गी व्यामिश्रितरूपा । अन्यत्र स्विन्नाङ्गीति च गम्यते । स्मितशोभिनः विकासरम्याः, कुड्मला मुकुलाः यस्यास्सा मन्दहासमनोहरदन्तमुकुला च गम्यते । दरकम्पिनी वायुस्पर्शादीषत्कम्पा सात्त्विकवेपथुमती च । नवा लता वल्ली, तत्सदृशी कान्ता च गम्यते । नृपेण कर्त्रा । दृशा । करणेन । दरादराभ्यां भयतृष्णाभ्याम् उपलक्षितेन सता । पपे पीता, गाढं दृष्टेत्यर्थः । उद्दीपकत्वादरः, प्रियासादृश्याद्दरश्च । दरोऽस्त्री शंखभोगर्तेष्वल्पार्थे त्वव्ययम्" इति वैजयन्ती । अत्र प्रस्तुतविशेषणसाम्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरलङ्कारः । "विशेषणानां तौल्येन यत्र प्रस्तुतवर्णनात् । अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरिष्यते" इति लक्षणात् ॥ ८५ ॥

विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात् ।
व्यलोकयच्चम्पककोरकावलीस्स शम्बरारेर्बलिदीपिका इव ॥८६॥

विचिन्वतीरिति ॥ पन्थानं गच्छन्ति नित्यमिति पान्थाः, नित्यपथिकाः । "पन्थो णः नित्यम्" इति णप्रत्ययः । पन्था देशश्च । त एव पतङ्गाः पक्षिणः । 'पतङ्गः पक्षिसूर्ययोः' इत्यमरः । तेषाम्, हिंसनैर्वधैः, अपुण्यकर्माणि । अलयः कज्जलानीवेत्युपमितसमासः । तेषां छलादित्यपह्नवालङ्कारः । विचिन्वतीः संगृह्णतीः हिंसापापकारिणीरित्यर्थः । चम्पककोरकावलीः । शम्बरारेः स्मरस्य । बलिदीपिकाः पूजादीपिका इवेत्युत्प्रेक्षा । स नलो व्यलोकयत् ॥ ८६ ॥

अमन्यतासौ कुसुमेषुगर्भजं परागमन्धङ्करणं वियोगिनाम् ।
स्मरेण मुक्तेषु पुरा पुरारये तदङ्गभस्मेव शरेषु सङ्गतम् ॥ ८७ ॥

अमन्यतेति ॥ असौ नलः कुसुमान्येव इषवः कामबाणाः, तेषां गर्भजं गर्भजातम् । वियोगिनामिति कर्मणि षष्ठी । अनन्धा अन्धाः क्रियन्ते अनेनेत्यन्धङ्करणम् । "आढ्यसुभग" इत्यादिना च्व्यर्थे ख्युन्प्रत्ययः । "अरुर्द्विषत्" इत्यादिना मुमागमः । तं परागम्, पुरा पूर्वं,

पुरारये पुरहराय । स्मरेण मुक्तेषु शरेषु । सङ्गतं संसक्तं तस्य पुरारेरङ्गे यद्भस्म तदिवामन्यतेत्युत्प्रेक्षितवानित्यर्थः । पुरा पुरारये ये मुक्तास्त एवैते पुरोवर्तिनः, कुसुमेषव इत्यभिमानः । अन्यथा एष तदङ्गभस्मसङ्गोत्प्रेक्षानुत्थानादिति ॥ ८७ ॥

पिकाद्वने शृण्वति भृङ्गहुंकृतैर्दशामुदञ्चत्करुणां वियोगिनाम् ।
अनास्थया सूनकरप्रसारिणीं ददर्श दूनः स्थलपद्मिनीं नलः ॥८८॥

पिकादिति ॥ वने श्रोतरि, पिकाद्वक्तुः सकाशात्, भृङ्गहुङ्कृतैः । वियोगिनां दशां अलिहुङ्कारकृतां दुरवस्थामित्यर्थः । उदञ्चत्करुणां विकसद्वृक्षविशेषम् । उद्यत्कृपञ्च यथा तथा शृण्वति । सति । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वः । अनास्थया श्रोतुमनिच्छया सूनं प्रसूनमेव करं प्रसारयतीति तथोक्ताम् । अनिष्टकथां करेण वारयन्तीमिव स्थितामित्यर्थः । सूनकरेति रूपकानुप्राणिता गम्योत्प्रेक्षेयम् । स्थलपद्मिनीम् । नलः, दूनः परितप्तः सन् । "दूयतेः कर्तरि क्तः" । "ल्वादिभ्यः" इति निष्ठानत्वम् । ददर्श ॥ ८८ ॥

रसालसालस्समदृश्यतामुना स्फुरद्द्विरेफारवरोषहुंकृतिः ।
समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्जनाभयम् ॥८९॥

रसालेति ॥ अमुना नलेन स्फुरद्द्विरेफारवः भ्रमरझङ्कार एव रोषेण या हुंकृतिर्हुङ्कारः सा यस्य सः । समीरलोलैर्वायुचलैः मुकुलैरंगुलिभिरिवेति भावः । वियोगिने जनाय । तर्जनाभयम् । दित्सन् दातुमिच्छन्निव स्थितः । "ददातेः सन्प्रत्ययः" । "सनि मीमा" इत्यादिना इसादेशः । "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः । "सस्यार्धधातुके" इति सकारस्य तकारः । रसालसालः चूतवृक्षः, समदृश्यत सम्यग्दृष्टः । द्विरेफेत्यादि रूपकोत्थापितेयं तर्जनाभयजननोत्प्रेक्षेति सङ्करः ॥ ८९ ॥

दिने दिने त्वं तनुरेधि रेऽधिकं पुनःपुनर्मूर्छ च मृत्युमृच्छ च ।
इतीव पान्थं शपतः पिकान् द्विजान् सखेदमैक्षिष्ट स लोहितेक्षणान्

दिने दिने इति ॥ रे इति हीनसम्बोधने । रे, त्वं दिने दिने । अधिकं तनुरेधि कृशो भव । "अस्तेर्लोटि सिप्" । "हुझल्भ्यो हेर्धिः" इति धित्वम्, "घ्वसोरेद्धावभ्यासलोपश्च" इत्येत्वम्, "श्नसोरल्लोपः । पुनःपुनर्मूर्छ च । मृत्युं मरणम् । ऋच्छ चेति । पान्थं नित्यपथिकम्, शपतः शपमानानिव स्थितानित्युत्प्रेक्षा । लोहितेक्षणान् रक्तदृष्टीन् । एकत्र स्वभावतः, अन्यत्र रोषाच्चेति द्रष्टव्यम् । पिकान् द्विजान्, कोकिलान् पक्षिणो ब्राह्मणांश्च, स नलः, सखेदम् ऐक्षिष्ट । स्वस्याप्युक्तशङ्कयेति भावः ॥ ९० ॥

अलिस्रजा कुड्मलमुच्चशेखरं निपीय चाम्पेयमधीरया दृशा ।
स धूमकेतुं विपदे वियोगिनामुदीतमाशङ्कितवानशङ्कत ॥ ९१ ॥

अलिस्रजेति ॥ अलिस्रजा भ्रमरपङ्क्त्या, उच्चशेखरं उन्नतशिरोभूषणं, अलिमलिनाङ्गमित्यर्थः । 'शिखास्वापीडशेखरौ' इत्यमरः । चाम्पेयं चम्पकविकारं कुड्मलम् । अथ चाम्पेयश्चम्पको हेमपुष्पकः' इत्यमरः । नन्वयुक्तमिदम् । 'न षट्पदो गन्धफलीमजिघ्रत्' इत्यादौ अलीनां चम्पकस्पर्शाभावप्रसिद्धेरिति चेन्न, स्पृशन्त्येव । किं तु स्पृष्टा म्रियन्ते तावतैव स्पर्शाभावप्रसिद्धिरिति क्वचित्कीर्तितः परिहारः । अथवा चाम्पेयं नागकेसरम् । 'चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यमरः । अधीरया दृशा निपीय, विक्लवदृष्ट्या गाढं दृष्ट्वा आशङ्कितवान् किञ्चिदनिष्टमुत्प्रेक्षितवान् स नलः । "अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः" इति लक्षणात् । वियोगिनां विपदे । उदीतम् उत्थितं धूमकेतुम्, अशङ्कत । अतर्कयदित्युत्प्रेक्षालङ्कारः ॥ ९१ ॥

गलत्परागं भ्रमिभङ्गिभिः पतत्प्रसक्तभृङ्गावलि नागकेसरम् ।
स मारनाराचनिघर्षणस्खलज्ज्वलत्कणां शाणमिव व्यलोकयत् ॥

गलदिति ॥ स नलः, गलत्परागं निर्यद्रजसं, भ्रमिभङ्गिभिः भ्रमणप्रकारैः, उपलक्षितं, पतत् अश्यत् । प्रसक्तभृङ्गावलि संसक्तालिकुलं, नागकेसरं कुसुमविशेषं, मारनाराचनिघर्षणैः, स्खलन्तः लुठन्तः, ज्वलन्तश्च

कणाः स्फुलिङ्गाः, यस्य तम् निकषोपलमिवेत्युत्प्रेक्षा । व्यलोकयत् । 'शाणस्तु निकषः कषः' इत्यमरः ॥ ९२ ॥

**तदङ्गमुद्दिश्य सुगन्धि पातुकाश्शिलीमुखालीः कुसुमाद्गुणस्पृशः स्वचापदुर्निर्गतमार्गणभ्रमात् स्मरः स्खनन्तीरवलोक्य लज्जितः ॥**

तदङ्गमिति ॥ सुगन्धि शोभनगन्धम् "गन्धस्य" इत्यादिना समासान्त इकारः । तदङ्गं तस्य नलस्य अङ्गमुद्दिश्य, लक्षीकृत्य, गुणो गन्धादिः मौर्वी च 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । तत्स्पृशः तद्युक्तात् । "स्पृशोऽनुदके" इति क्विन्प्रत्ययः । कुसुमादपादानात् पातुकाः धावन्तीः । "लषपत" इत्यादिना उकञ्प्रत्ययः । स्खनन्तीः, शिलीमुखालीरलिपंक्तिः, बाणपंक्तीश्च, अवलोक्य । स्वचापात्, पौष्पात्, दुर्निर्गता विषमनिर्गताः, ये मार्गणाः, बाणाः, तद्भ्रमाद्धेतोः, लज्जितोऽभवत् । नूनमिति शेषः । दुर्निर्गतेषवो ह्यधिकं स्खनन्तीति प्रसिद्धम् । अत्र स्खनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमात् भ्रान्तिमदलङ्कारः । स च शिलीमुखेति श्लेषानुप्राणितः । तदुत्थापिता चेयं स्मरस्य लज्जितत्वोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ९२ ॥

**मरुल्लसत्पल्लवकण्टकैः क्षतं समुच्चरच्चन्दनसारसौरभम् ।**
**स वारनारीकुचसञ्चितोपमं ददर्श मालूरफलं पचेलिमम् ॥९४॥**

मरुदिति ॥ मरुता, लसत्पल्लवानां चलत्किसलयानां, कण्टकैः तीक्ष्णाग्रैरवयवैः क्षतम् । अन्यत्र, लसद्विटनखैः क्षतमिति गम्यते । समुच्चरत् परितः प्रसर्पत्, चन्दनसारस्येव सौरभं यस्य तत् । अत एव वारनारीकुचेन वेश्यास्तनेन, सञ्चितोपमं सम्पादितसादृश्यमित्युपमालङ्कारः । 'वारस्त्री गणिका वेश्या' इत्यमरः । कुलाङ्गनास्तु नखक्षताद्यनौचित्याद्वारविशेषणम् । पचेलिमं स्वतः पक्वम् । "कर्म कर्तरि केलिम उपसंख्यानम्" इति पचेः केलिमच्प्रत्ययः । मालूरफलं बिल्वफलं । 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यमरः । स नलो ददर्श ॥ ९५ ॥

**युवद्वयीचित्तनिमज्जनाचितप्रसूनशून्येतरगर्भगह्वरम् ।**
**स्मरेषुधीकृत्य धिया भयान्धया स पाटलायाः स्तबकं प्रकम्पितः॥**

युवद्वयीति ॥ युवा च युवतिश्च तयोर्यूनोः, द्वयी मिथुनम् । तस्याः चित्तयोः कर्मणोः । मज्जते । ण्यन्ताल्ल्युट् । उचितैः क्षमैः, प्रसूनैः पुष्पबाणैः, शून्येतरदशून्यं, पूर्णं गर्भगह्वरं यस्य तम् । पाटलायाः पाटलवृक्षस्य, स्तबकं कुसुमगुच्छम्, भयान्धया भयमूढया, धिया भयजन्यभ्रान्त्येत्यर्थः । स्मरेषुधीकृत्य कामतूणीकृत्य, तथा विभ्रम्येत्यर्थः । अत एव भयात् प्रकम्पितः चकम्पे । अत्र पाटलस्तबके मदनतूणीरभ्रमात् भ्रान्तिमदलङ्कारः । "कविसम्मतसादृश्याद्विषयेऽपिहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥" इति लक्षणात् ॥ ९६ ॥

**मुनिद्रुमः कोरकितश्शितिद्युतिर्वनेऽमुनाऽमन्यत सिंहिकासुतः ।**
**तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ॥९६॥**

मुनिद्रुम इति ॥ अमुना नलेन, वने , कोरकितः सञ्जातकोरकः, शितिद्युतिः पत्रेषु कृष्णच्छविः, मुनिद्रुमः अगस्त्यवृक्षः, तमिस्रपक्षे, त्रुटिकूटेन क्षयव्याजेन, भक्षितम् । अभक्षितत्वे कुतः क्षय इति भावः । अत्र कूटशब्देन क्षयापह्नवेन भक्षणारोपादपह्नवभेदः । वैधवं चान्द्रमसम् । 'विधुः सुधांशुः शुभ्रांशुः' इत्यमरः । कलाकलापं कलासमूहं, वमन् उद्गिरन्, सिंहिकायाः सुतो राहुः, अमन्यत किल । अत्र कोरकितशितिद्युतित्वाभ्यां मुनिद्रुमस्येन्दुकलाकलापवमनविशिष्टराहुत्वोत्प्रेक्षा । सा चोक्तापह्नवोत्थापितेति सङ्करः ॥

**पुरो हठाक्षिप्ततुषारपाण्डरच्छदावृतेर्वीरुधि बद्धविभ्रमाः ।**
**मिलन्निमीलं विदधुर्विलोकिता नभस्वतस्तं कुसुमेषु केलयः ॥९७**

पुर इति ॥ पुरोऽग्रे, हठाज्झटित्याक्षिप्ता कृष्टा, तुषारेण हिमेन, पाण्डराणां छदानां पत्राणां, तुषारवत्पाण्डरस्य, छदस्याच्छादकस्य, वस्त्रस्य च, आवृतिः आवरणम् येन यस्य नभस्वतः वायोः, वीरुधि लतायाम् । बद्धा अनुबद्धाः, विभ्रमा भ्रमणानि लीलाश्च यासु ताः । कुसुमेषु विषये,



केलयः क्रीडाः । कुसुमेषुकेलयः कामक्रीडाश्च । विलोकिताः सत्यः तं मिलन्ती सज्जन्ती निमीला मीलनञ्च यस्य तम् । विदधुः निमीलिताक्षं चक्रुरित्यर्थः । विरहिणामुद्दीपकदर्शनस्य दुस्सहदुःखहेतुत्वादन्यत्र "नेक्षेतार्कं न नग्नां स्त्री न च संसक्तमैथुनाम्" इति निषेधादिति भावः । अत्र प्रस्तुतनभस्वद्विशेषणसामर्थ्यादप्रस्तुतकामुकविरहप्रतीतेः समासोक्तिरलङ्कारः ॥ ९७ ॥

**गता यदुत्सङ्गतले विशालतां द्रुमाश्शिरोभिः फलगौरवेण ताम् ।**
**कथं स धात्रीमतिमात्रनामितैर्न वन्दमानाभिनन्दति स्म तान् ॥**

गता इति ॥ द्रुमाः, यस्या धात्र्याः उत्सङ्गतले उपरिदेशे, अङ्कदेशे च । विशालतां वृद्धिं गताः । तां धात्रीं भुवं, मातरञ्च, उपमातरं वा । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इत्यमरः । "कर्मणि ष्ट्रन्" इति दित्रो दधातेर्वा ष्ट्रन्प्रत्ययः । फलगौरवेण सुकृतातिशयेन, फलभरेण च हेतुना । अतिमात्रं नामितैः प्रह्वीकृतैः । नमेर्मित्वविकल्पाद्ध्रस्वाभावः । शिरोभिरग्रैरुत्तमाङ्गैश्च । वन्दमानान् स्पृशतोऽभिवादयमानांश्च, तान् प्रकृतान् । अत एव यच्छब्दानपेक्षा । स नलः, कथं नाभिनन्दति स्म अभिननन्दैवेत्यर्थः । वृक्षाणां क्षेत्रानुरूपफलसम्पत्तिम्, अपत्यानां मातृभक्तिं च को नाम नाभिनन्दतीति भावः । अत्रापि विशेषणसामर्थ्यात् पुत्रत्वप्रतीतेः समासोक्तिरलङ्कारः ॥ ९८ ॥

**नृपाय तस्मै हिमितं वनानिलैस्सुधीकृतं पुष्परसैरहर्महः ।**
**विनिर्मितं केतकरेणुभिस्सितं वियोगिनेऽदत्त न कौमुदी मुदः ॥**

अत्रातपस्य चन्द्रिकात्वरूपणाय तद्धर्मान् सम्पादयति—नृपायेति ॥ वनानिलैः उद्यानवनवातैः, हिमं शीतलं कृतं हिमितम् । "तत्करोति" इति ण्यन्तात्कर्मणि क्तः । पुष्परसैः वनवातानीतैः मकरन्दैः, सुधीकृतं अमृतीकृतं, तथा कैतकरेणुभिः, सितम्, विनिर्मितं शुभ्रीकृतम् । अह्नो महः तेजः अहर्महः आतपः । "रोः सुपि" इति रेफादेशः । तदेव कौमुदीति व्यस्तरूपकम् । वियोगिने तस्मै नृपाय । मुदः प्रमोदान्, नादत्त न दत्तवती । प्रत्युतोद्दीपकैवाभूदिति भावः ॥ ९९ ॥

वियोगभाजोपि नृपस्य पश्यता तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः कुहूरुताहूयत चन्द्रवैरिणी ॥१००॥

वियोगभाज इति ॥ वियोगभाजोऽपि, वियोगिनोऽपि, नृपस्य तदाननमेव, साक्षादमृतांशुं प्रत्यक्षचन्द्रम्, पश्यता । अत एव रोषादद्यापि चन्द्रतां न जहातीति क्रोधादिव अरुणचक्षुषा पिकेन । चन्द्रवैरिणी कुहूः निजालाप एव कुहूर्नष्टचन्द्रामावास्येति श्लिष्टरूपकम् । 'कुहूस्स्यात्कोकिलालापनष्टेन्दुकलयोरपि' इति विश्वः । मुहुराहूयत आहूता किमित्युत्प्रेक्षा पूर्वोक्तरूपकसापेक्षेति सङ्करः । आननचन्द्रस्येयमेव कुहूराह्वयनीया । अस्या एव तत्कान्तिहारित्वसम्भवादिति भावः ॥ १०० ॥

अशोकमर्थान्वितनामताशयागतान् शरण्यं गृहशोचिनोऽध्वगान् ।
अमन्यतावन्तमिवैष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम् ॥१०१॥

अशोकमिति ॥ एष नलः, पल्लवैः, प्रतीष्टानि प्रतिगृहीतानि संछन्नानि, कामज्वलदस्त्राणि तद्रूपाणि, जालकानि क्षारकाः बालमुकुलगुच्छा येन तम् । पल्लवसंछन्नजालकरूपकामास्त्रमित्यर्थः । अन्यथा तद्दर्शनादेव ते म्रियेरन्निति भावः । अशोकम् । अत एवार्थान्वितनामता नास्ति शोको यस्मिन्नित्यन्वर्थसंज्ञता तत्कृतया आशया । अस्मानप्यशोकान् करिष्यतीत्यभिलाषेण । शरणे रक्षणे साधु समर्थं शरण्यम् । मत्वेति शेषः । 'शरणं रक्षणे गृह' इति विश्वः । आगतान् शरणागतानित्यर्थः । गृहान् दारान् शोचन्तीति गृहशोचिनः गृहानुद्दिश्य शोचत इत्यर्थः । 'गृहाः पत्न्यां गृहे स्मृताः' इति विश्वः । अध्वगान् प्रोषितान् अवन्तमिव शरणागतरक्षणं महाफलस्मरणात् । अन्यथा महादोषस्मरणाच्च रक्षन्तमिवेत्यर्थः । अमन्यत ज्ञातवान् । अस्त्रभीरूणां तद्गोपनमेव रक्षोपाय इतिभावः ॥ १०१ ॥

विलासवापीतटवीचिवादनात्पिकालिगीतेश्शिखिलास्यलाघवात् ।
वनेऽपि तौर्यत्रिकमारराध तं क्व भोगमाप्नोति न भाग्यभाग्जनः ॥

विलासेति ॥ विलासवापी विहारदीर्घिका तस्यास्तटे वीचीनां वादनात्पिकानामलीनाञ्च गीतेर्गानात्, शिखिनां मयूराणाम्, लास्यलाघवात्

नृत्तनैपुण्याच्च । वनेऽपि । तं नलम्, तौर्यत्रिकं नृत्यगीतवाद्यत्रयं, कर्तृ आरराध आराधयामास। तथा हि भाग्यभाक् भाग्यवान् जनः क्व। भुज्यत इति भोगः सुखम् । तं नाप्नोति सर्वत्रैवाप्नोतीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १०२ ॥

तदर्थमध्याप्य जनेन तद्वने शुका विसृष्टाः पटवस्तमस्तुवन् ।
स्वरामृतेनोपजगुश्च शारिकास्तथैव तत्पौरुषगायनीकृताः ।१०३।

तदर्थमिति ॥ जनेन सेवकजनेन, तदर्थं नलप्रीत्यर्थम् । अध्याप्य स्तुतिं पाठयित्वा तस्मिन् वने, विसृष्टाः मुक्ताः । पटवः स्फुटगिरः । शुकास्तं नलम् अस्तुवन् । तथैव शुकवदेव । तदर्थमध्याप्य मुक्ताः । तत्पौरुषस्य नलपराक्रमस्य. गायिन्यो गायकाः कृताः गायिनीकृताः, शारिकाः स्वरामृतेन मधुरस्वरेणेत्यर्थः । उपजगुश्च ॥ १०३ ॥

इतीष्टगन्ध्याढ्यमटन्नसौ वनं पिकोपगीतोऽपि शुकस्तुतोऽपि च ।
अविन्दतामोदभरं बहिः परं विदर्भसुभ्रूविरहेण नान्तरम् ।१०४।

इतीति ॥ इति इष्टगन्धाढ्यम् इष्टसौगन्ध्यसम्पन्नं, वनमटन् । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति वनस्य देशत्वात्कर्मत्वम् । असौ नलः, पिकैः कोकिलैः, उपगीतोऽपि शुकैः स्तुतोऽपि च । परं केवलम् । 'परं स्यादुत्तमानाप्तवैरिदूरेषु केवल' इति विश्वः । बहिः, आमोदभरं सौरभ्यातिरेकमेव, अविन्दत । विदर्भसुभ्रूविरहेण हेतुना । आन्तरं आमोदभरम् आनन्दातिरेकं, नाविन्दत न लब्धवान् । प्रत्युत दुःखमेवान्वभूदित्यर्थः । 'आमोदो गन्धहर्षयोः' इति विश्वः ॥ १०४ ॥

करेण मीनं निजकेतनं दधद्द्रुमालवालाम्बुनिवेशशङ्कया ।
व्यतर्कि सर्वर्तुघने वने मधुं स मित्रमत्रानुसरन्निव स्मरः।१०५।

करेणेति ॥ स नलः, निजकेतनं निजलाञ्छनं, मीनं द्रुमालवालाम्बुषु, निवेशशङ्कया प्रवेशभिया करेण, दधत् तादृक्छुभरेखाव्याजेन दधान इत्यर्थः । सर्वर्तुघने सर्वर्तुसंकुले । अत्र अस्मिन् वने, मित्रं सखायं, मधुं वसन्तम्, अनुसरन् अन्विष्यन्, स्मर इव व्यतर्कि तर्कित इत्युत्प्रेक्षा ॥ १०५ ॥

लताबलालास्यकलागुरुस्तरुप्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनानिलः १०६

लतेति ॥ लता एवाबलाः, तासां लास्यकलासु मधुरनृत्यविद्यासु, गुरुरुपदेष्टेति मान्योक्तिः । तरुप्रसूनगन्धोत्कराणां वृक्षकुसुमसौरभसम्पदां, पश्यतोहरः पश्यन्तमनादृत्य हरः, प्रसह्यापहर्तेत्यर्थः । 'पश्यतो यो हरत्यर्थं स चोरः पश्यतोहरः' इति हलायुधः । "पचाद्यच्" । "षष्ठी चानादरे" इति षष्ठी । "वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु" इत्यलुक् । एतेन सौरभ्यमुक्तम् । मधु मकरन्द एव, गन्धवारि गन्धोदकं, तत्र प्रणीतलीलाप्लवनः कृतलीलावगाह इति शैत्योक्तिः । ईदृग्वनानिलः । अमुं नलम्, असेवत । गुणवानेव सेवकः सेव्यप्रियो भवतीति भावः ॥ १०६ ॥

अथ स्वमादाय भयेन मन्थनाच्चिरत्नरत्नाधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपांनिधिर्वने तटाको ददृशेऽवनीभुजा १०७

अथेति ॥ अथ वनालोकनानन्तरं मन्थनाद्भयेन । धनार्थं पुनर्मथिष्यन्तीति भयादिति भावः । चिरात्, उच्चितं सञ्चितं, चिरत्नं, चिरन्तनम् । "चिरपरुत्परारिप्रगेभ्यः त्नोवक्तव्यः" इति त्नप्रत्ययः । तच्च तद्रत्नाधिकम् । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । स्वं धनम्, आदाय तस्मिन् वने । निलीयान्तर्धाय निवसन् वर्तमानः अपांनिधिरिवेत्युत्प्रेक्षा । तटाकः सरोविशेषः, अवनीभुजा राज्ञा, ददृशे दृष्टः ॥ १०७ ॥

पयोनिलीनाभ्रमुकामुकावलीरदाननन्तोरगपुच्छसच्छवीन् ।
जलार्धरुद्धस्य तटान्तभूभिदो मृणालजालस्य निभाद्बभार यः ॥

यदुक्तं धनमादायेति तदेवात्र सम्पादयति । पय इत्यादि नवभिः श्लोकैः —पय इति ॥ यस्तटाकः, जलेनार्धरुद्धस्य अर्धच्छन्नस्य, तटान्तभूभिदस्तटप्रान्तदेशनिर्गतस्येत्यर्थः । मृणालजालस्य बिसवृन्दस्य, निभाद्व्याजादित्यपह्नवालङ्कारः । "निभो व्याजसदृक्षयोः" इति विश्वः । अनन्तोरगस्य शेषाहेः, पुच्छेन सच्छवीन् सवर्णान्, तद्वद्धवलानित्यर्थः । पयोनिलीनानां, अभ्रमुकामुकावलीनां ऐरावणश्रेणीनां, रदान् दन्तान्, बभार । तत्र एक

एवैरावणः अत्र त्वसंख्या इति व्यतिरेकः । अभ्रमुकामुक इति द्वितीया-समासो मधुपिपासुरितिवत् । " न लोक " इत्यादिना षष्ठीप्रतिषेधात् । "लषपत" इत्यादिना कमेरुकञ् प्रत्ययः ॥ १०८ ॥

तटान्तविश्रान्ततुरङ्गमच्छटास्फुटानुबिम्बोदयचुम्बनेन यः ।
बभौ चलद्वीचिकशान्तशातनैस्सहस्रमुच्चैःश्रवसामिव श्रयन् १०९

तटान्तविश्रान्तेति ॥ यस्तटाकः, तटान्ते तटप्रान्ते, विश्रान्ता या तुरङ्गमच्छटा नलानीताश्वश्रेणी तस्याः स्फुटं यथा तथा अनुबिम्बोदयचुम्बनेन प्रतिबिम्बाविर्भावव्याप्त्या निमित्तेन, वीचय एव कशास्तासाम् अन्तशातनैः अग्रताडनैः । "अश्वादेस्ताडनी कशा" इत्यमरः । चलदुच्चलत् । उच्चैःश्रवसां सहस्रं श्रयन् प्राप्नुवन्निव । बभावित्युत्प्रेक्षा । व्यतिरेकश्च पूर्ववत् । एतेन नलाश्वानां उच्चैःश्रवःसाम्यं गम्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ १०९ ॥

सिताम्बुजानां निवहस्य यश्छलाद्बभावलिश्यामलितोदरश्रियाम् ।
तमस्समच्छायकलङ्कसंकुलं कुलं सुधांशोर्बहुलं वहन् बहु ।११०।

सिताम्बुजानामिति ॥ यस्तटाकः, अलिभिः, श्यामलितोदरश्रियां श्यामीकृतमध्यशोभानां,—सिताम्बुजानां, पुण्डरीकानां, निवहस्य, छलात् । तमस्समच्छायैः तिमिरसवर्णैः, कलङ्कैः संकुलं बहुलं सम्पूर्णं, बह्वनेकं सुधांशोः चन्द्रस्य, कुलं वंशं, वहन् बभौ । अत्र छलशब्देन पुण्डरीकेषु विषयापह्नवेन चन्द्रत्वारोपादपह्नवभेदः । व्यतिरेकस्तु पूर्ववत् ॥११०॥

रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनीस्तम्बकदम्बकैतवात् मृणालशेषाहिभुवान्वयायि यः ॥

रथाङ्गेति । यस्तटाकः, रथाङ्गं चक्रवाकं, चक्रायुधं च । यद्यपि चक्रवाके रथाङ्गनामेति प्रयोगो रूढः, तथापि प्रायेणास्य चक्रशब्दपर्यायित्वेन प्रयोगदर्शनात्तद्वदस्यापि उभयत्र प्रयोगं मन्यते कविः । तद्भाजा । भजो ण्विः । कमलः कमलया च, अनुषङ्गिणा संसर्गवता, शिलीमुखस्तोमसखेन अलिकुलसहचरेण । अन्यत्र सखिशब्दः सादृश्यवचनः, तत्सवर्णेनेत्यर्थः ।

मृणालं शेषाहिरिवेत्युपमितसमासः । तद्भुवा तदाकारेण । अन्यत्र मृणालमिव शेषाहिः तद्भुवा तदाधारकेण, शार्ङ्गिणा विष्णुना, सरोजिनीनां स्तम्बाः गुल्माः । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । तेषां कदम्बस्य कैतवान्मिषात्, अन्वयायि अनुयातोऽधिष्ठित इति यावत् । अत्रापि कैतवशब्देन स्तम्बत्वमपह्नुत्य तत्र शार्ङ्गित्वारोपादपह्नवभेदः ॥१११॥

तरङ्गिणीरङ्कजुषः स्ववल्लभास्तरङ्गरेखा बिभरांबभूव यः ।
दरोद्गतैः कोकनदौघकोरकैर्धृतप्रवालांकुरसञ्चयश्च यः ॥११२॥

तरङ्गिणीरिति ॥ किञ्च, यस्तटाकः, अङ्कजुषः अन्तिकभाजः, उत्सङ्गसङ्गिनीश्च । तरङ्गरेखास्तरङ्गराजीरेव स्ववल्लभास्तरङ्गिणीरिति व्यस्तरूपकम् । बिभरांबभूव बभार । "भीह्रीभृहुवां श्लुवच्च" इति विकल्पादाम्प्रत्ययः । किञ्च यस्तटाकः, दरोद्गतैः ईषदुद्बुद्धैः, कोकनदौघकोरकैः रक्तोत्पलषण्डकलिकाभिः, धृतप्रवालांकुरसञ्चयः धृतविद्रुमांकुरनिकरश्चेति । अत्रापि कोकनदौघकोरकाणां विद्रुमत्वेन रूपणाद्रूपकमेव ॥११२॥

महीयसः पङ्कजमण्डलस्य यश्छलेन गौरस्य च मेचकस्य च ।
नलेन मेने सलिले निलीनयोस्त्विषं विमुञ्चन्विधुकालकूटयोः ॥

महीयस इति ॥ यस्तटाकः, महीयसः महत्तरस्य, गौरस्य च, मेचकस्य च, पङ्कजमण्डलस्य सितासितसरोजषण्डयोः छलेन सलिले निलीनयोः विधुकालकूटयोः, सितासितयोरिति भावः । त्विषं विमुञ्चन् विसृजन्निव नलेन मेने । अत्र छलेन विमुञ्चन्नवेति सापह्नवोत्प्रेक्षा ॥११३॥

चलीकृता यत्र तरङ्गरिङ्गणैरबालशैवाललतापरम्पराः ।
ध्रुवं दधुर्वाडवहव्यवाड्धस्थितिप्ररोहत्तमभूमधूमताम् ॥ ११४

चलीकृता इति ॥ यत्र यस्मिन् तटाके, तरङ्गरिङ्गणैः तरङ्गकम्पनैः, चलीकृताः चञ्चलीकृताः, अबालानां कठोराणां, शैवाललतानाम्, परम्पराः पंक्तयः, हव्यं वहतीति हव्यवाडग्निः । "वाहश्च" इत्यण्प्रत्ययस्य छन्दोमात्रविषयत्वादनादरेण भाषायां प्रयोगः । वाडवहव्यवाहो वडवाग्नेः, अधःस्थितया

अन्तरवस्थानेन, प्ररोहत्तमो बहिःप्रादुर्भवत्तमो भूमा येषां ते च ते धूमाश्च तेषां भावस्तत्ता तां दधुः, बहिरुत्थितधूमपटलवद्बभुरित्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥११४॥

**प्रकाममामोदभरं विवृण्वती करम्बितादित्यमवाप्य कण्टकैः ।**
**धृतस्फुटश्रीगृहविग्रहा दिवा सरोजिनी यत्प्रभवाप्सरायिता ॥११५॥**

प्रकाममिति ॥ आदित्यं सूर्यम्, अवाप्य । प्रकामं कण्टकैः नालगतैस्तीक्ष्णाग्रैरवयवैः, करम्बिता दन्तुरिता । अन्यत्र आदित्यम् अदितिपुत्रमिन्द्रम्, अवाप्य कण्टकैः पुलकैः करम्बिता । अत एव आमोदभरं परिमलसम्पदं, आनन्दसम्पदञ्च । विवृण्वती प्रकटयन्ती । दिवा दिवसेन, धृतानि स्फुटश्रीगृहाणि पद्मानि यस्य सः विग्रहः स्वरूपं यस्यास्सा । अन्यत्र दिवा स्वर्गेण स्फुटश्रीगृहम् उज्ज्वलशोभास्पदं, विग्रहो देहो यस्यास्सा, स्वर्लोकवासिनीत्यर्थः । यस्तटाकः, प्रभवः कारणं यस्यास्सा । यज्जन्या सरोजिनी अप्सरायिता अप्सरा इवाचरिता । उपमानात् "कर्तुः क्यङ् सलोपश्च" इति । ततः कर्तरि क्तः । "ओजसोऽप्सरसो नित्यम्" इति सकारलोपः । श्लिष्टविशेषणेयमुपमा ॥११५॥

**यदम्बुपूरप्रतिबिम्बितायतिर्मरुत्तरङ्गैस्तरलस्तटद्रुमः ।**
**निमज्य मैनाकमहीभृतस्सतस्ततान पक्षान् धुवतस्सपक्षताम् ॥**

यदिति ॥ यस्य तटाकस्याम्बुपूरे, प्रतिबिम्बितायतिः प्रतिफलितायामः, मरुत्तरङ्गैः वातवीजनैः तरलश्चलः तटद्रुमः, निमज्य सतः वर्तमानस्य, पक्षान् पत्राणि धुवतः कम्पयतः । मैनाकमहीभृतः मैनाकाद्रेः, सपक्षतां सदृशतां इन्द्राद्रक्षितत्वात्पक्षवत्ताञ्च ततानेत्युपमा ॥ ११६ ॥

**पयोधिलक्ष्मीमुषि केलिपल्वले रिरंसुहंसीकलनादसादरम् ।**
**स तत्र चित्रं विहरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः ॥**

पयोधीति ॥ अथ नैषधो निषधानां राजा नलः । "जनप[illegible]द्दात् क्षत्रियादञ्" । पयोधिलक्ष्मीमुषि तत्कल्प इत्यर्थः । तत्र के[illegible]ल्वले

क्रीडासरसि, रिरंसूनां रन्तुमिच्छूनां, हंसीनां कलनादेषु मधुरस्वरेषु, सादरं सस्पृहम् । अत एवान्तिके तत्समीपे विहरन्तं चरन्तम् । चित्रमद्भुतं, हिरण्मयं सुवर्णमयम् । दाण्डिनायनादिना निपातनात्साधुः । हंसम् अबोधि ददर्शेत्यर्थः ॥ ११७ ॥

**प्रियासु बालासु रतिक्षमासु च द्विपत्रितं पल्लवितञ्च बिभ्रतम् ।**
**स्मरार्जितं रागमहीरुहांकुरं मिषेण चञ्च्वोश्चरणद्वयस्य च ॥**

पुनस्तमेव विशिनष्टि—प्रियास्विति ॥ बालासु अरतिक्षमासु, किञ्चिदासन्नयौवनास्वित्यर्थः । अन्यथा रागांकुरासम्भवात् । रतिक्षमासु युवतिषु चेति द्विविधासु प्रियासु विषये क्रमात् । चञ्च्वोः त्रोटयोः । 'चञ्चुस्त्रोटिरुभे स्त्रियाम्' इत्यमरः । चरणद्वयस्य च मिषेण, द्विपत्रितं सञ्जातद्विपत्रं, पल्लवितं सञ्जातपल्लवञ्च, चञ्च्वोर्द्वयोः संपुटितत्वसाम्या-द्विपत्रितत्वम् । चरणयोस्तु विसृमरांगुलित्वेन पल्लवसाम्यात् पल्लवितत्वं । राजहंसानाम् लोहितचञ्चुचरणत्वात् तन्मिषेणेत्युक्तम् । स्मरार्जितं स्मरेणैव वृक्षारोपकेणात्पादितमित्यर्थः । राग एव महीरुहः, तस्यांकुरं रागयुक्तमहीरुहांकुरं, बिभ्रतम् । चञ्चुपुटमिषेण द्विपत्रितं बालिकागोचर-रागम् । चरणमिषेण पल्लवितं युवतिविषयरागञ्च बिभ्रतमित्यर्थः । सः हंसम्, अबोधीति पूर्वेणान्वयः । "नाभ्यस्ताच्छतुः" इति नुम्प्रतिषेधः । वृक्षांकुरः प्रथमं द्विपत्रितो भवति । पश्चात् पल्लवित इति प्रसिद्धम् । अत्र रागं बिभ्रतमिति हंसविशेषणाद्रागस्य हंसाधिकरणत्वोक्तेः प्रियास्व-धिकरणभूतास्विति उपाध्यायविश्वेश्वरभट्टारकव्याख्यानं प्रत्याख्ययेम् । अन्यनिष्ठस्य रागस्य अन्याधिकरणत्वायोगात् । न चायमेक एव उभयनिष्ठ इति भ्रमितव्यम् । तस्येच्छापरपर्यायस्य तथात्वायोगात् । अन्यथा बुद्ध्यादीनामपि तथात्वापत्तौ सर्वसिद्धान्तविरोधाद्विषयानुरागाभाव-प्रसङ्गाच्च । उभयोरपि रागित्वसाम्यादुभयनिष्ठत्वभ्रमः केषाञ्चित् । तस्मात्कामिनोरन्योन्याधिकरणरागयोरन्योन्यविषयत्वमेव नाधिकरण-त्वमिति सिद्धम् । प्रियास्विति विषयसप्तमीति सर्वं रमणीयम् । अत्र

रागमहीरुहांकुरमिति रूपकम् चञ्चुचरणमिषेणेत्यपह्नवानुप्राणितमित्त सङ्करः । तेन च बाह्याभ्यन्तररागयोर्भेदेऽपि तदभेदरूपातिशयोक्त्युत्थापिता चञ्चुचरणव्याजेनान्तरितस्यैव रागस्य बहिरंकुरितत्वोत्प्रेक्षा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ११८ ॥

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनोविनोदिनम् ।**
**प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत् ॥**

महीमहेन्द्र इति ॥ महीमहेन्द्रः भूदेवेन्द्रः, स नलः, एकान्तं नितान्तं मनो विनोदयतीति तथोक्तम् । शकुन्तं पक्षिणं, क्षणम् अवेक्ष्य । प्रियावियोगा.न्निर्भरमतिमात्रं विधुरो दुःस्थोऽपि मनागीषत्कुतूहलाक्रान्त-मनाः कौतुकचित्तः अभूत् तं गृहीतुकामोऽभूदित्यर्थः ॥ ११९ ॥

**अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।**
**तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥**

ननु कथमीदृशी चपलवृत्तिरस्य धीरोदात्तस्येत्याशंक्य नात्र जन्तोः स्वातन्त्र्यं किं तु भाव्यर्थानुसारिणी विधातुरिच्छैव तथा प्रेरयतीत्याह—अवश्येति ॥ अवश्यभव्येषु अवश्यंभाव्येषु विषये । "भव्यगेय" इत्यादिना कर्तरि यत्प्रत्ययान्तो निपातः। "लुम्पेदवश्यमः कृत्ये" इत्यवश्यमो मकारलोपः। अनवग्रहग्रहा अप्रतिबन्धनिर्बन्धा, निरंकुशाभिनिवेशेति यावत् । 'ग्रहोऽग्रह-निर्बन्धग्रहणेषु रणोद्यमः' इति विश्वः । वेधसः स्पृहा विधातुरिच्छा, यया दिशा धावति येन अध्वना प्रवर्तते । तयैव दिशा । भृशावशात्मना अत्यन्तपरतन्त्रस्वभावेन, जनस्य चित्तेन तृणेन वात्या वातसमूह इव । "पाशादिभ्यो यः" अनुगम्यते । वेधसः स्पृहा कर्म ॥ १२० ॥

**अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः ।**
**स तिर्यगावर्जितकन्धरशिरः पिधाय पक्षेण रतिक्लमालसः ॥**

चिकीर्षितार्थे दैवानुकूल्यं कार्यतो दर्शयति—अथेति ॥ अथ नलदृष्टि-पथप्राप्त्यनन्तरं, रतिक्लमालसः स खगो हंसः, तदा नलकुतूहलकाल एव

क्षणं, एकः पादो यस्यां क्रियायामित्येकपादिकाम् । एकपादिकां, अवलम्ब्य। ष्ठन्प्रत्ययः । "तद्धितार्थ" इत्यादिना संख्यासमासः । "यस्येति च" इत्यकारलोपस्य स्थानिवद्भावेन ताद्रूप्याभावान्न पादः पदादेशः । तामेकपादिकां, अवलम्ब्य । तिर्यगावर्जित कन्धरः आवर्तितग्रीवस्सन्, पक्षेण शिरः 'पिधाय' उपपल्वलं पल्वलसमीपे, निद्रौ सुष्वाप । स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति लक्षणात् ॥ १२१ ॥

सनालमात्माननिर्जितप्रभं ह्रिया नतं काञ्चनमम्बुजन्म किम् ।
अबुद्ध तं विद्रुमदण्डमण्डितं स पीतमम्भःप्रभुचामरञ्च किम् ॥

सनालमिति ॥ ॥ स नलः, निद्राणं हंसम्, आत्माननिर्जितप्रभं निजमुखनिराकृतशोभम् । अत एव ह्रिया नतं सनालं नालसहितं, काञ्चनं सौवर्णं, अम्बुजन्म अम्बुजं किम् । तथा विद्रुमदण्डेन प्रवालमयदण्डेन मण्डितं भूषितं, पीतं पीतवर्णं, अम्भःप्रभोः अपाम्पत्युर्वरुणस्य, चामरं किम् । इतिशब्दोऽत्राध्याहार्यः इति चाबुद्ध बुद्धवान्, उत्प्रेक्षितवानित्यर्थः। बुध्यतेर्लुङि तङ् । "झषस्तथोर्धोऽधः" इति तकारस्य धकारः ॥ १२२ ॥

कृतावरोहस्य हयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती ।
तयोः प्रवालैर्वनयोस्तथाम्बुजैर्नियोद्धुकामे किमु बद्धवर्मणी ॥

कृतेति ॥ ततस्तन्निद्रानन्तरं, भयात, कृतावरोहस्य कृतावतारस्य, अस्य नलस्य उपानहौ चार्मणी पादत्राणे । 'पादत्राणे उपानहौ' इत्यमरः । बिभ्रती बिभ्राणे । पदे चरणे, तयोः प्रकृतयोः वनयोः सलिलकाननयोः । 'वने सलिलकानने' इत्यमरः । प्रवालैः पल्लवैः, तथा अम्बुजैश्च सहेत्यर्थः । सहार्थे तृतीया । नियोद्धुं कामो ययोस्ते नियोद्धुकामे युद्धकामे इत्यर्थः । "तुं काममनसोरपि" इति मकारलोपः । अतो बद्धवर्मणी किमु बद्धकवचे इव रेजतुरित्युत्प्रेक्षा । १२३ ॥

विधाय मूर्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम् ।
उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना ॥१२४॥

विधायेति ॥ अयं नलः, स्वयमेव कपटेन छद्मना । वामनीं ह्रस्वां गौरादित्वात् ङीप् । बलिध्वंसिविडम्बिनीं कपटवामनविष्णुमूर्त्यनुसारिणीमित्यर्थः मूर्तिं विधाय कायं सङ्कोच्येत्यर्थः । मौनिना निश्शब्देन । चरणेन । उपेतपार्श्वः । प्राप्तहंसान्तिकः पाणिना पतङ्गं पक्षिणं समवस्त संघटितवान् जग्राहेत्यर्थः । स्वभावोक्तिलङ्कारः ॥ १२४ ॥

तदात्तमात्मानमवेत्य संभ्रमात्पुनः पुनः प्रायसदुत्प्लवाय सः ।
गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम् ॥

तदात्तमिति ॥ सः हंसः, आत्मानं, तदात्तं तेन नलेन आत्तं गृहीतं, अवेत्य ज्ञात्वा, सम्भ्रमात्, उत्प्लवाय उत्पतनाय, पुनःपुनः प्रायसत् आयस्तवान् । यसु प्रयत्न इति धातोर्लुङि पुषादित्वात् च्लेरङादेशः । उड्डयने उत्पतने निराशतां गतः, विरुत्योत्क्रुश्य, निरोद्धुः गृहीतुः, करौ केवलं करावेव, दशति स्म दष्टवान् । अत्रापि स्वभावोक्तिभेदः ॥ १२५ ॥

ससम्भ्रमोत्पातिपतत्कुलाकुलं सरः प्रपद्योत्कतयाऽनुकम्पताम् ।
तमूर्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव ।

ससम्भ्रमेति ॥ ससम्भ्रमं सत्वरं, उत्पातिनोड्डीयमानेन, पतत्कुलेन पक्षिसंघेन, आकुलं सरः कर्तृ । उत्कतया उन्मनस्कतया । "उत्क उत्मनाः" इति निपातनादभिधानाच्च साधुः । अनुकम्पतां दयालुतां, प्रपद्य प्राप्य, तं नृपं, ऊर्मिभिः लोलैः वारिरुहैः करैरिति व्यस्तरूपकम् । पतगग्रहात् पक्षिग्रहणात्, न्यवारयदिवेत्युत्प्रेक्षा । वास्तवनिवारणासम्भवादुत्प्रेक्षा । निवारणस्य करसाध्यत्वात्तत्र रूपकाश्रयणम् । अत एव इवस्योपमानाभावेन अर्थानुसाराद्यवहितान्वयेनाप्युत्प्रेक्षाव्यञ्जकत्वमिति रूपकोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ १२६ ॥

पतत्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम् ।
चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली ॥१२७॥

पतत्रिणेति ॥ रुचिरेण पतत्रिणा हंसेन, वञ्चितम् । तत्पल्वलं सरः

प्रविहाय । प्रयान्त्याः गच्छन्त्याः श्रियो लक्ष्म्याः, चलद्भ्यां पदाम्भोरुहनूपुराभ्यां, उपमा साम्यं यस्यास्सा कलहंसमण्डली कूले चुकूज । स्वयूथ्यभ्रंशे तेषां कूजनं स्वभावः । हंसेनैव सह गच्छन्त्याः सरःशोभायाः, श्रीदेव्या सहाभेदाध्यवसायेन कूजत्कलहंसमण्डल्यां तन्नूपुरत्वमुत्प्रेक्ष्यते । उपमाशब्दोऽप्युपमार्थानुपपत्तेः सम्भावनालक्षक इत्यवधेयम् ॥ १२७ ॥

न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु ॥

न वासयोग्येति ॥ इयमीदृग्वसुधा वासयोग्या निवासार्हा न । कुतः। अङ्ग भो यस्याः वसुधायाः, उज्झितस्थितिः त्यक्तमर्यादः, ईदृशः घातुकः, त्वं पतिरितीत्थं खगाः क्षितिं प्रहाय नभः श्रिताः तं नलं आरवैः उच्चैर्निभिः आचुक्रुशुः खलु । उक्तरीत्या सनिन्दोपालम्भं चक्रुरित्युत्प्रेक्षा गम्या ॥१२८

न जातरूपच्छदजातरूपता द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ।
अवादि तेनाथ स मानसौकसा जनाधिनाथः करपञ्जरस्पृशा ॥

न जातरूपेति ॥ इयं ईदृक्, जातरूपच्छदैः सुवर्णपक्षैः, जातरूपता उत्पन्नसौन्दर्यं, द्विजस्य पक्षिणः, न दृष्टा अदृष्टचरी । हिरण्मयपक्षी कुत्रापि न दृष्ट इत्यर्थः । इति मुहुः स्तुवन् । स जनाधिनाथः, अथास्मिन्नन्तरे करपञ्जरस्पृशा करतलगतेन, मानसं मानससरः, ओकः स्थानं यस्य तेन मानसौकसा तेन हंसेन । 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः । अवादि उक्तः । वदेः कर्मणि लुङ् ॥ १२९ ॥

धिगस्तु तृष्णातरलं भवन्मनस्समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्णवस्येव तुषारशीकरैर्भवेदमीभिः कमलोदयः कियान् ॥१३०॥

तदेव चतुर्भिराह—धिगस्त्विति ॥ हेम्नो जन्म येषां तान् हेमजन्मनः हैमान् , मम पक्षान् पत्राणि, समीक्ष्य तृष्णातरलं आशावशगं, भवन्मनः धिगस्त्विति निन्दा । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । धिगुपर्यादिषु त्रिष्विति धिग्योगान्मन इति द्वितीया । तुषारशीकरैर्हिमकणैः, अर्णव-

स्येव तव अमीभिः पक्षैः कियान् । कमलायाः लक्ष्म्याः कमलस्य च, उदयो वृद्धिः, भवेत ! न कियानपीत्यर्थः ॥ १३० ॥

न केवलं प्राणिवधो वधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः ।
विगर्हितं धर्मधनैर्निबर्हणं विशिष्य विश्वासजुषां द्विषामपि ॥

न केवलमिति ॥ हे नृप, त्वदीक्षणात् त्वन्मूर्तिदर्शनात्, विश्वसितान्तरात्मनो विस्रब्धचित्तस्य विश्वस्तस्येत्यर्थः । मम केवलं प्राणिवधः प्राणिमात्रवधः, न भवति । किंतु, विश्वासघातपातकमित्यर्थः । ततः किमत आह—विश्वासजुषां विस्रम्भभाजां द्विषामपि, निबर्हणं हिंसनं, धर्मधनैर्धर्मपरैर्मन्वादिभिः विशिष्यातिरिच्य, विगर्हितं अतिगर्हितमित्यर्थः ॥ १३१ ॥

पदे पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्यते ।
धिगीदृशं ते नृपतेः कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥

पदे पदे इति ॥ रणोद्भटाः रणेषु प्रचण्डाः, भटा योधाः, पदे पदे सन्ति सर्वत्र सन्तीत्यर्थः । वीप्सायां द्विर्भावः । एषः हिंसारसः हिंसारागः, तेषु भटेषु न पूर्यते । अत्र काकुः—न पूर्यते किमित्यर्थः । नृपतेर्महाराजस्य ते तव, ईदृशमवध्यवधरूपं, कुविक्रमं कुत्सितपराक्रमं, धिक् । यः कुविक्रमः, कृपाश्रये कृपाविषये, अनुकम्पनीये कृपणे दीने पतत्रिणि क्रमत इति शेषः ॥ १३२ ॥

फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी घृणीयते ॥

फलेनेति ॥ यस्य मम मुनेरिव वारिभूरुहां जलाशयरुहाणां पद्मिनीनाम् । अन्यत्र वारिरुहां भूरुहाञ्च, फलेन मूलेन च, इत्थमनेन दृश्यमान प्रकारेण, वृत्तयो जीविकाः । तस्मिन्नप्यनपराधेऽपीति भावः । दण्डधारिणा दण्डप्रयोक्त्रा, अदण्ड्यदण्डिनेत्यर्थः । पत्या त्वया हेतुना । अद्य धरणी कथं न घृणीयते न जुगुप्सते, जुगुप्सत एवेत्यर्थः । 'घृणा जुगुप्सा कृपयोः' इति विश्वः । घृणतेः "कण्ड्वादिभ्यो यक्" इति यगन्ताल्लट् । तत्र पाठे

" वृणिङ् " इति ङित्करणादात्मनेपदम् । अकार्यकारिणं भर्तारमपि गर्हन्ते गृहिण्य इति भावः ॥ १३३ ॥

**इतीदृशैस्तं विरचय्य वाङ्मयैस्सचित्रवैलक्ष्यकृपं नृपं खगः ।**
**दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः ॥**

इतीति ॥ इतीत्थं, स खगो हंसः, तं नृपं, ईदृशैः सनिन्दोपालम्भै-रित्यर्थः । वाङ्मयैर्वाग्विकारैः । "एकचो नित्यं मयटमिच्छन्ति" इति मयट्प्रत्ययः । तिरश्चोऽभिवादनादाश्चर्यं चित्रं परैः स्वकार्योद्घाटनादपत्रपा वैलक्ष्यं, परार्तिदर्शनेन तन्निवर्तनेच्छा कृपा' ताभिः सह वर्तत इति सचित्र-वैलक्ष्यकृपं, विरचय्य विधाय । "ल्यपि लघुपूर्वात्" इत्ययादेशः । दयासमुद्रे तदाशये तच्चित्ते गिर एव कारुण्यरसापगा करुणारसनदीः, अतिथीचकार प्रवेशयामासेत्यर्थः । समुद्रे नदीप्रवेशो युक्त इति भावः, । रूपका-लङ्कारः ॥ १३४ ॥

**मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।**
**गतिस्तयोरेष जनस्तमर्दयन्नहो विधे त्वां करुणा रुणद्धि नो ॥**

ता एव गिरः प्रपञ्चयति—मदेकपुत्रेति ॥ तत्र तावद्दैवमुपालभते । हे विधे, जननी माता, अहमेवैकः पुत्रो यस्याः सा मदेकपुत्रा, स्वनाशे तस्या अपत्यान्तरं नास्तीत्यर्थः । जरातुरा स्वयमप्यशक्ता, वरटा स्वभार्या ' हंसस्य योषिद्वरटा ' इत्यमरः । नवप्रसूतिरचिरप्रसवा, तपस्विनी अनाथा शोच्या । ' तपस्वी तापसे शोच्य' इति वैजयन्ती । एष जनः स्वय-मित्यर्थः । तयोर्जायाजनन्योः, गतिः शरणम् । तं जनं, अर्दयन् विधे अहो विधातः । "विशिष्टमामन्त्रित सम्बोधने च" इति सम्बोधनार्थे लटः शत्रादेशः । त्वां करुणा नो रुणद्धि, मत्पीडनान्न निवारयतीति काकुः । न रुणद्धि किमित्युत्प्रेक्षा ॥ १३५ ॥

**मुहूर्तमात्रं भवनिन्दया दयासखास्सखायस्स्रवदश्रवो मम ।**
**निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातस्सुतशोकसागरः ॥१३६॥**

अथ मातरं शोचति—मुहूर्तेति ॥ हे मातः, मम सखायः सुहृदः दयासखाः सदयाः । अत एव स्रवदश्रवः सन्तः 'अश्रु नेत्राम्बु । रोदनञ्चास्र-मश्रु च' इत्यमरः । मुहूर्तमात्रम् । भवनिन्दया संसारगर्हणं निवृत्तिं शोकोपरतिं एष्यन्ति । किंतु, त्वयैव सुतशोक एव सागरः । परमत्यन्तं, दुःखेनोत्तीर्यत इति दुरुत्तरो दुस्तरः । तरतेः कृच्छ्रार्थेषु लट् प्रत्ययः ॥ १३६ ॥

**मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।**
**विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः ॥**

अथ भार्यां शोचति—मदर्थेति ॥ हे प्रिये, मह्यमिमे मदर्थे । "अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या" तयोः सन्देशमृणाल-योर्वाचिकबिसयोः मन्थरः तत्प्रेषणे विलम्बितप्रवृत्तिः, प्रियः । कियद्दूरे कियति दूरे देशे, वर्तत इति त्वया उदिते उक्ते पृष्टे सतीत्यर्थः । अथ प्रश्नानन्तरं रुदतः अनिष्टोच्चारणाशक्त्या अश्रूणि विमुञ्चतः । पक्षिणः इतो गच्छतो गतान् खगान्, विलोकयन्त्याः तव । स क्षणः कालः, कीदृग्भविता भविष्यति, वज्राघातप्राय इति भावः । भवतेः कर्तरि लुट् ॥ १३७ ॥

**कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।**
**वियोक्ष्यसे वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराक्षरा ॥१३८॥**

कथमिति ॥ हे विधातः, प्रियायाः वरटायाः, शैत्यमृदुत्वशिल्पिनः तादृक्तदङ्गशैत्यमार्दवनिर्माणकुशलात्, तव पाणिपङ्कजात्पङ्कजमृदुशिशिरा-त्पाणेरित्यर्थः । मयि विषये 'वल्लभया वियोक्ष्यसे' इत्येवंरूपा, अत एव ललाटं तपन्ति दहन्तीति ललाटंतपानि । "असूर्यललाटयोर्दृशितपोः" इति खश्प्रत्ययः "अरुर्द्विषत" इत्यादिना मुमागमः । तानि निष्ठुराक्षराणि कर्ण-कठोराणि चाक्षराणि यस्याः सा, लिपिरक्षरविन्यासः, कथं निर्गता निःसृता । अत्र कारणविरुद्धकार्योत्पत्तिकथनाद्विषमालङ्कारः । "विरुद्धकार्यस्योत्पत्तिर्य-त्रानर्थस्य वा भवेत् । विरूपघटना वा स्याद्विषमालंकृतिस्त्रिधा ॥" इति लक्षणात् ॥ १३८ ॥

अपि स्वयूथ्यैरशनिक्षतोपमं ममाद्य वृत्तान्तमिमं बतोदिता।
मुखानि लोलाक्षि दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि॥

अपीति॥ अपि चेत्यपेरर्थः, अद्यास्मिन् दिने। "सद्यः परुत्" इत्यादिना निपातः। स्वस्य यूथ्यैर्यूथभवैः, सहचरैर्हंसैः कर्तृभिः अशनिक्षतोपमं वज्रप्रहारप्रायं, मम इमं वृत्तान्तं अनर्थवार्तां, उदिता उक्ता सती। वदेर्ब्रूञर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः। "वचिस्वपि" इत्यादिना सम्प्रसारणम्। हे लोलाक्षि चञ्चलाक्षि, दशापि दिशां मुखानि शून्यानि अलक्ष्यलक्षकानि, विलोकयिष्यसि, असंशयं संशयो नास्तीत्यर्थः। अर्थाभावेऽव्ययीभावः। बतेति खेदे॥

ममैव शोकेन विदीर्णवक्षसा त्वया विचित्राङ्गि विपद्यते यदि।
तदस्मि दैवेन हतोऽपि हा हतस्स्फुटं यतस्ते शिशवः परासवः॥

ममैवेति॥ हे विचित्राङ्गि लोहितचञ्चुचरणत्वाद्विचित्रगात्रि, मम शोकेनैव मद्विपत्तिदुःखेनैव, विदीर्णवक्षसा विदारितहृदयया त्वया विपद्यते म्रियते यदि, तर्हि दैवेन हतोऽपि, स्फुटं व्यक्तम्, पुनः हतोऽस्मि। हेति विषादे। 'हा विस्मयविषादयोः' इति विश्वः। कुतः? यतः ते शिशवः, परासवः, मातुरप्यभावे पोषकाभावान्मृताः। अतः शिशुमरणभावनया च द्विगुणितं मे मरणदुःखं प्राप्तमित्यर्थः॥ १४०॥

तवापि हा हा विरहात्क्षुधाकुलाः कुलायकूलेषु विलुठ्य तेषु ते।
चिरेण लब्धा बहुभिर्मनोरथैर्गताः क्षणेनास्फुटितेक्षणा मम॥१४१॥

ननु मन्मृतौ तेषां कथं मरणमत आह—तवेति॥ हे प्रिये, बहुभिः मनोरथैः चिरेण लब्धाः कृच्छ्रलब्धा इत्यर्थः। अस्फुटितेक्षणाः अद्याप्यनुन्मीलिताक्षाः, मम ते शिशवः। तवापि, न केवलं ममैवेति भावः। विरहाद्विपत्तेः क्षुधाकुलाः क्षुत्पीडिताः, तेषु स्वसम्पादितेष्वित्यर्थः। कुलायकूलेषु नीडान्तिकेषु। 'कुलायो नीडमस्त्रियाम्' इत्यमरः। विलुठ्य परिवृत्य क्षणेन गताः। हा हेति खेदे॥ १४१॥

सुताः कमाहूय चिराय चूंकृतैर्विधाय कम्प्राणि मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य स स्रुतस्य सेकाद्बुबुधे नृपाश्रुणः

सुता इति ॥ हे सुताः, चूङ्कृतैः चुङ्कारैः, चिराय चिरं कम् आहूय कमप्याहूय कं प्रति कमपि प्रति मुखानि कम्प्राणि विधाय कथासु शिष्यध्वं कथामात्रशेषा भवत । कुत्रापि पित्रोरदर्शनान् म्रियध्वम् । प्राप्तकाले लोट् । मरणकालः प्राप्त इत्यर्थः । इति इत्युक्त्वेत्यर्थः । गम्यमानार्थत्वा-दप्रयोगः । प्रमील्य मूर्छित्वा । स हंसः स्रुतस्य दयार्द्रभावात् प्रवहतः । नृपस्य अश्रुणो बाष्पस्य सेकाद् बुबुधे संज्ञां लेभे । प्रायेणात्र स्वभावो-क्तिरूह्या ॥ १४२ ॥

इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयावनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥ १४३ ॥

अथ सर्वत्र भिन्नसर्गान्तैरिति काव्यलक्षणाद्वृत्तान्तरेण श्लोकद्वयमाह-इत्थमिति ॥ इत्थं विलपन्तं परिदेवयमानं अमुं हंसं, अवनिपालो नलः, दीनेष्वार्तेषु, दयालुतया, रूपमाकृतिः, अदर्शि अपूर्वत्वादवलोकितम् । यस्मै यदर्थं रूपदर्शनार्थमेव, धृतो गृहीतः, असि । अथ यथेच्छं गच्छ इत्यभि-धाय अमुञ्चत् । "तोटकवृत्तमिदं भभभा गौ" इति लक्षणात् ॥

आनन्दजाश्रुभिरनुस्रियमाणमार्गा-
न्प्राक्छोकनिर्गलितनेत्रपयःप्रवाहान् ।
चक्रे स चक्रनिभचंक्रमणच्छलेन
नीराजनां जनयतां निजबान्धवानाम् ॥ १४४ ॥

आनन्देति ॥ सः हंसः, चक्रनिभचंक्रमणस्य मण्डलाकारभ्रमणस्य, छलेन नीराजनां जनयतां कुर्वतां निजबान्धवानां बन्धमुक्तं बान्धवा नीराज-यन्तीति समयाचारः । प्राङ्मोचनात् पूर्वं, शोकेन निर्गमिता निस्सारिताः । ये नेत्रपयःप्रवाहाः बाष्पपूराः, तानानन्दजाश्रुभिरानन्दबाष्पैः, अनुस्रिय-माणमार्गान्, अनुगम्यमानमार्गान्, चक्रे कृतवान् । अत्र पक्षिणां

स्वभावसिद्धं बन्धमुक्ते स्वयूथ्यभ्रमणं, छलशब्देनापह्नुत्य तत्र नीराजनत्वारोपादपह्नवभेदः । अत्र चमत्कारकारित्वान्मङ्गलाचरणरूपत्वाच्च सर्वत्र सर्गान्तश्लोकेषु आनन्दशब्दप्रयोगः । यथाह भगवान् महाभाष्यकारः । "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति । अध्येतारः प्रवक्तारो भवन्ति" इति । वसन्ततिलका वृत्तम् । "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् । सर्गान्तत्वाद्वृत्तभेदः । यथाह दण्डी—"सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः । सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जनम् ॥" इति ॥ १४४ ॥

**श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरस्सुतं**
**श्रीहीरस्सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।**
**तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभंग्या महा-**
**काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः॥१४५॥**

अथ कविः काव्यवर्णनामाख्यानपूर्वकं सर्गसमाप्तिं श्लोकनिबन्धनेनाह— श्रीहर्षमिति ॥ कविराजराजिमुकुटानां विद्वच्छ्रेष्ठश्रेणिमौलीनां, अलङ्कारः अलङ्कारभूतः, हीरः वज्रमणिः, श्रीहीरो नाम विद्वान् जितः इन्द्रियचयो येन तं श्रीहर्षं श्रीहर्षनामकं यं सुतं सुषुवे जनयामास । मामल्लदेवी नाम स्वमाता सा च यं, सुषुवे । तस्य श्रीहर्षस्य, यच्चिन्तामणिमन्त्रस्य चिन्तनं उपासना । तस्य फले फलभूते शृङ्गारभंग्या शृङ्गाररसवृत्त्या, चारुणि । निषधानां जनपदानां राजा नैषधः नलः, तदीयचरिते नलचरितनामके, महाकाव्ये, अयं आदिः प्रथमः सर्गः, गतः समाप्त इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । शार्दूलविक्रीडितमेतत् । "सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥ १४५ ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते नैषधव्याख्याने जीवातुसमाख्याने

प्रथमः सर्गः समाप्तः ।

# द्वितीयः सर्गः ।

अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यस्स तमानन्दमविन्दत द्विजः ॥ १ ॥

अधिगत्येति ॥ अथमोचनानन्तरं, स द्विजः पक्षी विप्रश्च । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । जगत्यधीश्वरात् क्ष्मापतेः भुवनपतेश्च । 'जगती भुवने क्ष्मायाम्, इति विश्वः । पुरुषोत्तमात् पुरुषश्रेष्ठात्, विष्णोश्च । ततः तस्मात् प्रकृतान्नलात् । अन्यत्र प्रसिद्धाच्च । मुक्तिं मोचनं, निर्वाणञ्च । अधिगत्य प्राप्य । य आनन्दो वचसामपि न गोचरः वक्तुमशक्यः । "यतो वाचो निवर्तन्त" इत्यादेरवाङ्मनसगोचरश्च । तमानन्दं परमानन्दञ्च, अविन्दतालभत । विदेर्लाभार्थात् "कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदम् । शेमुचादीनामिति नुमागमः । अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणादुभयश्लेषानुपपत्तेर्भेदान्तरानवकाशाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणासम्भवाद्ध्वनिरेवायम् । ब्राह्मणस्य विष्णोर्मोक्षानन्दप्राप्तिलक्षणार्थान्तरप्रतीतेर्न श्लेषः । प्रकृताप्रकृतोभयगतः । अस्मिन् सर्गे एकशतश्लोकपर्यन्तं वियोगिनीवृत्तम् । "विषमे ससजा गुरुस्समे सभरा लोऽथ गुरुर्वियोगिनी" इति लक्षणादिति संक्षेपः ॥ १ ॥

अधुनीत खगस्स नैकधा तनुमुत्फुल्लतनूरुहीकृताम् ।
करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती ॥ २ ॥

अधुनीतेति ॥ स खगो हंसः, उत्फुल्लतनूरुहीकृतां नृपकरपीडनादुद्बुद्धपतत्रीकृताम् । 'पतत्रञ्च तनूरुहम्' इत्यमरः । तनुं शरीरम् । नैकधा अनेकधा, नञर्थस्य नशब्दस्य "सुप्सुपा" इति समासः । नञ्समासे नलोपप्रसङ्गः । अधुनीत धुतवान् । धूञः क्र्यादेर्लङि तङ् । प्वादीनां ह्रस्व

इति ह्रस्वः । किञ्च करयन्त्रणेन नृपकरपीडनेन दन्तुरे निम्नोन्नतमध्यप्रदेशे, पक्षती पक्षमूले । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । चञ्चुपुटेन त्रोटिसम्पुटेन व्यलिखत, विलेखनेन ऋजूचकारेत्यर्थः । एतदादिश्लोकचतुष्टये स्वभावोक्तिरलङ्कारः ॥ २ ॥

अयमेकतमेन पक्षतेरधिमध्योर्ध्वगजंघमंघ्रिणा ।
स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥

अयमिति ॥ अयं हंसः, स्खलनक्षण एव मोचनानन्तरमेवेत्यर्थः । एकतमेनाङ्घ्रिणा पक्षतेः पक्षमूलस्याधिमध्यं मध्ये ऊर्ध्वगा ऊर्ध्वगामिनी जङ्घा यस्मिन् कण्डूयने तत्तथा, द्रुतकण्डूयितमौलिः, सत्वरं कर्षितचूडस्सन् । आलयं निजावासं, शिश्रिये श्रितवान् ॥ ३ ॥

स गरुद्वनदुर्गदुर्ग्रहान् कटु कीटान् दशतस्सतः क्वचित् ।
तुतुदे तनुकण्डु पण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥

स इति ॥ पण्डितः निपुणः, स हंसः, गरुतः पक्षा एव वनदुर्गम्, तत्र दुर्ग्रहान् ग्रहीतुमशक्यान्, कटु तीक्ष्णं, दशतः दन्तैस्तुदतः, क्वचित् कुत्रचिदेव सतः वर्तमानान् कीटान् क्षुद्रजन्तून् पटुचञ्चूपुटस्य समर्थत्रोटेः कोट्या अग्रेण कुट्टनैः घट्टनैस्तनुरल्पा कण्डूर्यस्मिन् तनुकण्डु यथा तथा । "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वः । तुतुदे निवारितवान् । "स्वरितञितः" इत्यात्मनेपदम् ॥ ४ ॥

अयमेत्य तटाकनीडजैर्लघु पर्यव्रियताथ शङ्कितैः ।
उदडीयत वैकृतात्करग्रहजादस्य विकस्वरस्वरैः ॥ ५ ॥

अयमिति ॥ अयं हंसः तटाकनीडजैः सरःपक्षिभिस्तत्रत्यहंसैः । 'नीडोद्भवा गरुत्मन्त' इत्यमरः । लघु क्षिप्रमेत्यागत्य, पर्यव्रियत परिवृतः । वृणोतेः कर्मणि लङ् । अथ परिवेष्टनानन्तरं, अस्य हंसस्य: करग्रहजान्नलकरपीडनजन्याद्विकृतादेव वैकृताद्विलुलितपक्षरूपाद्विकारदर्शनादित्यर्थः । स्वार्थेऽण्प्रत्ययः । शङ्कितैश्चकितैः । अत एव विकस्वरस्वरैरुच्चैर्घोषैस्तैरुदडीयतोड्डीनम् । डीङो भावे लङ् ॥ ५ ॥

दधतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः ।
स नलस्य ययौ करं पुनस्सरसः कोकनदभ्रमादिव ॥ ६ ॥

दधत इति ॥ अथ स खगो हंसः बहुशैवला भूरिशैवला क्ष्मा भूर्यस्य तद्बहुशैवलक्ष्मं, तस्य भावः तत्ता तां दधतो दधानात् सरसः पल्वलात् । बहूनि शैवलक्ष्माणि शिवभक्तचिह्नानि यस्य स बहुशैवलक्ष्मा तस्य भावः, तत्ता तां दधतो दधानस्य नलस्य । रुद्राक्षाणि मधुव्रता इवेत्युपमितसमासः । ते धृता येन तं करं कोकनदभ्रमाद्रक्तोत्पलभ्रान्तेरिव पुनर्ययौ । कोकनदं तु रुद्राक्षसदृशमधुव्रतं खलु । अत्र बहुशैवलेत्यादौ शब्दश्लेषस्तदनुप्राणिता, रुद्राक्षमधुव्रतमित्युपमा तत्सापेक्षा चेयं कोकनदभ्रमादिवेत्युत्प्रेक्षेति सङ्करः ॥ ६ ॥

पतगश्चिरकाललालनादतिविस्रम्भमवापितो नु किम् ।
अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः ॥ ७ ॥

अथास्य स्वयमागमनादुत्प्रेक्षते—पतग इति ॥ पतगो हंसश्चिरकाललालनादुपलालनादतिविस्रम्भमतिविश्वासम् । 'समौ विस्रम्भविश्वासौ' इत्यमरः । अवापितः प्रापितो नु किमित्युत्प्रेक्षा । अन्यथा कथं पुनः स्वयमागच्छेदिति भावः । किञ्च, एतस्य महीभुजो भुजं भजन् स्वयमाप्नुवन्, अतुलं कुतूहलं, विदधे कौतुकञ्चकारेत्यर्थः । अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः शब्दार्थालङ्कारयोः तिलतण्डुलवत्संसृष्टिः । "एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि । सङ्ख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः ॥" इति ॥ ७ ॥

नृपमानसमिष्टमानसस्स निमज्जत्कुतुकामृतोर्मिषु ।
अवलम्बितकर्णशष्कुलीकलशीकं रचयन्नवोचत ॥ ८ ॥

नृपमानसमिति ॥ इष्टमानसः प्रियमानसः, राजहंसः, कुतुकं हर्षस्तदेव अमृतं सुधा तस्योर्मिषु निमज्जदन्तर्गतं नृपमानसं नलमनः, कर्णौ शष्कुल्याविव कर्णशष्कुल्यौ ते एव कलश्यौ ते अवलम्बिते अवहिते कृते धृते च येन तत्तथोक्तम् । "नद्यृतश्च" इति कप् । रचयन् कुर्वन्, अवोचत

उक्तवान् । नले मज्जन्नपि तरणार्थं कलशमवलम्बते, तद्वत् कर्णशष्कुली कलश्यावित्युपमारूपकयोः संसृष्टिः ॥ ८ ॥

**मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः ।**
**स्मरसुन्दर मां यदत्यजस्तव धर्मस्स दयोदयोज्ज्वलः ॥९॥**

**मृगयेति** ॥ धर्मागममर्मपारगैर्धर्मशास्त्रतत्त्वपारदर्शिभिरपि, अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड इति गमेर्डप्रत्ययः । नृपैर्मृगया आखेटो न विगीयते न गर्ह्यते । तथापि हे स्मरसुन्दर मामत्यज इति यत्, स त्यागस्तव दयोदयेनोज्ज्वलो विमलो निरुपाधिक इति यावत्, धर्मः सुकृतं, न केवलमाकारादेव सुन्दरोऽसि किंतु धर्मतोऽपीति भावः ॥ ९ ॥

**अबलस्वकुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान् ।**
**अनवद्यतृणार्दिनो मृगान् मृगयाघाय न भूभृतां घ्नताम् ॥**

ननु प्राणिहिंसा कथं न विगीयतेऽत आह—**अबलेति** ॥ अबलस्वकुलाशिनो झषान् । दुर्बलस्वकुलघातिनो मत्स्या इति प्रसिद्धिः । निजनीडद्रुमपीडिनो विण्मोक्षफलभक्षणादिना स्वाश्रयवृक्षपीडाकरान् खगान्, अनवद्यतृणार्दिनः अनपराधितृणहिंसकान्मृगान् । "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति मनुस्मृत्या तरुतृणादीनामपि प्राणित्वात्तद्धिंसापि दोष इति भावः । सर्वत्रापि ताच्छील्ये णिनिप्रत्ययः । घ्नतां हिंसतां भूभृतां मृगया अघाय पापाय न भवति । तद्वधस्य दण्डरूपत्वात्, प्रत्युताकरणे दोष इति भावः ॥ १० ॥

**यदवादिषमप्रियं तव प्रियमाधाय नुनुत्सुरस्मि तत् ।**
**कृतमातपसंज्वरं तरोरभिवर्ष्यामृतमंशुमानिव ॥ ११ ॥**

तथापि किमर्थं पुनरागतं त्वयेत्यत आह—**यदिति** ॥ तव यदप्रियमवादिषमवोचं, प्रियमाधाय प्रियं कृत्वा तदप्रियं, तरोः कृतं स्वकृतमातपसंज्वरमातपसन्तापं अमृतमुदकमभिवर्ष्य । 'पयः कीलालममृतम्' इत्यमरः । अंशुमानिव नुनुत्सुर्नोत्तुं प्रमार्ष्टुमिच्छुः, अस्मि । नुदप्रेरण इत्यस्माद्धातोः सन्नन्तादुप्रत्ययः ॥ ११ ॥

उपनम्रमयाचितं हितं परिहर्तुं न तवापि साम्प्रतम् ।
करकल्पजनान्तराद्विधेश्शुचितः प्रापि स हि प्रतिग्रहः ॥१२॥

तर्हि भवन्मोचनसुकृतमेव मम पर्याप्तं किं दृष्टोपकारेणेति न वाच्यमित्याह—उपनम्रमिति ॥ अयाचितमप्रार्थितमपि नम्रमुपनतं हितं इह चामुत्र चोपकारकं वस्तु, तत्रापि परिहर्तुं न साम्प्रतं न युक्तम् । "अयाचितं हितं ग्राह्यमपि दुष्कृतकर्मणः" इति स्मरणादिति भावः । तदपि मादृशस्य कथं पृथग्जनात् ग्राह्यमत आह—करेति ॥ हि यस्मात् कारणात्, स प्रतिग्रहः, करकल्पं करस्थानीयमित्यर्थः । ईषदसमाप्तौ कल्पप्प्रत्ययः । यज्जनान्तरं स्वयं यस्य तस्माच्छुचितः शुद्धाद्विधेः ब्रह्मणः, प्रापि प्राप्तः । न तु मत्त इति भावः । आप्नोतेः कर्मणि लुङ् । विधिरेव ते दाता अहं तस्योपकरणमात्रम् । अतो न अधमयाञ्चालाघवं तवेति भावः ॥ १२ ॥

पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते ।
इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्तुमार्तयः ॥१३॥

ननु सार्वभौमस्य मे तिरश्चा त्वया किमुपकरिष्यते तत्राह—पतगेनेति ॥ पतगेन पक्षिमात्रेण, मया जगत्पतेस्सार्वभौमस्य तवापकृत्यै उपकाराय प्रभूयते क्षम्यते किम् । न भूयत एवेत्यर्थः । भावे लट् । इति वेद्मि अक्षमत्वं जानामि । तदपि तथाप्यार्तयः, यास्तु त्वया विनिवर्तिता इति भावः । मां प्रत्युपकर्तुं न त्यजन्ति प्रत्युपकारकरणाय प्रेरयन्तीत्यर्थः । अत्र पतगोऽप्यहं महोपकारिणस्ते महोपकारं करवाणीति भावः ॥ १३ ॥

अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम् ।
पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥१४॥

अथवा यथाशक्तिरक्षोऽस्त्वित्याह—अचिरादिति ॥ अथवा उपकर्तुरचिरादविलम्बादुपाय एवौपयिकः, विनयादित्वात्स्वार्थे ठक् । 'उपधाया ह्रस्वत्वञ्च' इति ह्रस्वः । तत आगता औपयिकी तामात्मौपयिकीं स्वोपायसाध्यामित्यर्थः । तत आगत इत्यण्प्रत्यये, "टिड्ढाणञ्" इत्या-

दिना ङीप् । उपक्रियामाचरेत् प्रत्युपकारं कुर्यात् । चरधातोर्विधिलिङ् । इत्थमेवं सति सोपक्रिया पृथुरधिकास्तु । अथ अथवा अणुरल्पास्तु, विदुषां विवेकिनामिहास्मिन् विषये विशेषे ग्रह आग्रहो न । गुणग्राहिणो विवेकिनः कृतज्ञतामेव अस्य पश्यन्ति न दोषमन्विष्यन्तीत्यर्थः ॥ १४ ॥

भविता न विचारचारु चेत्तदपि श्राव्यमिदं मदीरितम् ।
खगवागियमित्यतोऽपि किं न मुदं दास्यति कीरगीरिव ॥

अथ स्ववाक्ये आदरं याचते—भवितेति ॥ हे नृप, इदं वक्ष्यमाणं मदीरितं मद्वचनं, विचारे विमर्शं चारु युक्तं न भविता न भविष्यति चेत्तदपि अविचारितरमणीयं श्राव्यं श्रोतव्यं, इयं खगवागित्यतोऽपि हेतोः कीरगीः शुकवागिव मुदं न दास्यति किं दास्यत्येव, प्रयोजनान्तराभावेऽपि श्रोतव्यमित्यर्थः । ददातेः लृट् ॥ १५ ॥

स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥१६॥

अथ यद्वक्तव्यं तदाह—स इति ॥ अर्थेन अभिधेयेन सह वर्तत इति सार्थकम् । "तेन सहेति तुल्ययोग" इति बहुव्रीहिः । "वोपसर्जनस्य" इति सहशब्दस्य विकल्पात् सभावः । "शेषाद्विभाषा" इति कप्समासान्तः ततः च्विरभूततद्भावे । अरिसार्थेषु शत्रुसंघेषु, सार्थकीकृतनामा भीम इत्याख्या येन स तथोक्तः, स प्रसिद्धः । बिभ्यत्यस्मादिति भीमः । 'भियो म' इत्यपादानार्थे निपातनान्मप्रत्यय औणादिकः । भीम इति भूपतिः नृपः, जयति किल सर्वोत्कर्षेण वर्तते खलु । विदर्भभूर्विदर्भदेशः, यं भूपतिं प्रभुं भर्तारमवाप्य शक्रो भर्ता यस्यास्तां शक्रभर्तृकाम् । "नद्यृतश्च" इति कप् । द्यां दिवमपि हसति । किमुतान्यभर्तृकदेशानित्यर्थः । स्त्रियो हि भर्तुरुत्कर्षाद्धासं कुर्वन्तीति भावः । अत्र विदर्भभुवोऽपि द्युहासासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ १६ ॥

दमनादमनाक्प्रसेदुषस्तनयां तथ्यगिरस्तपोधनात् ।
वरमाप स दिष्टविष्टपत्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥

दमनादिति ।। स भीमभूपतिरमनागनल्पं प्रसेदुषो निजोपासनया प्रसन्नात् । "भाषायां सदवसश्रुवः" इति सदेर्लिटः क्वसादेशः । दमनात् दमनाख्यात् तथ्यगिरः अमोघवचनात् तपोधनादृषेः, दिष्टानां कालानां विष्टपानां लोकानां च त्रितययोरनन्यसदृग्गुणोदयां कालत्रये लोकत्रये चानन्यसाधारणगुणप्रकर्षां तनयां दुहितरं वरमाप । वरत्वेन लब्धवानित्यर्थः । 'देवादृवृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिय' इत्यमरः ॥ १७ ॥

**भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।**
**उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधे ॥ १८ ॥**

अथास्या नामधेयं व्युत्पादयन्नेवाह—भुवनत्रयेति । असौ वरप्रसादलब्धा तनया कर्त्री यतस्तनुश्रिया निजशरीरसौन्दर्येण करणेन । भुवनत्रयसुभ्रुवां त्रैलोक्यसुन्दरीणां कमनीयतामदं सौन्दर्यगर्वं दमयन्ती अस्तं गमयन्ती । दमेर्ण्यन्तात् "न पादमि" इत्यादिना कर्त्रभिप्राय आत्मनेपदापवादात् परस्मैपदप्रतिषेधेऽप्यकर्त्रभिप्रायविवक्षायां परस्मैपदेर्लटः शत्रादेशः । उदियाय उदिता इणो लिट् । ततस्तस्मादेव निमित्ताद्दमयन्तीत्यभिधामाख्यां दधे । दधातेर्लिट् ॥ १८ ॥

**श्रियमेव परं धराधिपाद्गुणसिन्धोरुदितामवेहि ताम् ।**
**व्यवधावपि वा विधोः कलां मृडचूडानिलयां न वेद कः ॥**

अथैकविंशतिश्लोकैश्चिकुरादिपादपर्यन्तं दमयन्तीं वर्णयति—श्रियमिति ।। हे नृप, तां दमयन्तीं, गुणसिन्धोः गुणसागराद्धराधिपाद्भीमनरेन्द्रादुदितामुत्पन्नां श्रियं साक्षाल्लक्ष्मीमेव परं ध्रुवमवेहि जानीहि । अवपूर्वादिणो लोटि सेर्हिरिति ह्यादेशे ङित्वान्न सार्वधातुकगुणः संहितायामाद्गुणः । अत्र केवलावपूर्वस्य इणो ज्ञानार्थत्वादाङ्प्रश्लेषे तदलाभात् । प्रश्लेषेऽपि "ओमाङोश्च" इति पररूपमिति केषाञ्चित्प्रक्रियोपन्यासो वृथा प्रक्षाल्य त्यागः । अवेहीति वृद्धिरवद्येति वामनसूत्रमप्यवाङ्प्रश्लेष एव भ्रान्तिप्रासवृद्धिप्रतिषेधपरम् । गुण एव युक्त इति व्याख्यानाद् अन्यथा "ओमाङोश्च"

इति पररूपमेव युक्तमित्युच्येत इति । न च देशव्यवधानान्न श्रीरेषेति वाच्यमित्याह—व्यवधौ व्यवधाने सत्यपि । "उपसर्गे घोः किः" इति कि प्रत्ययः । मृडचूडानिलयां हरशिखाश्रयां, कलां विधोः इन्दोरेव कलां को वा न वेद । सर्वोऽपि वेदैवेत्यर्थः । "विदो लटो वा" इति वैकल्पिको णलादेशः । यथा हरशिरोगतापि कला चन्द्रकलैव । तथा भीमभवनोदिताप्येषा श्रीरेवेति सौन्दर्यातिशयोक्तिः । अत्र श्रीकलयोः नृपमृडौ वाक्यद्वये बिम्बप्रतिबिम्बभावेन सामान्यधर्मवत्तया निर्दिष्टाविति दृष्टान्तालङ्कारः । "यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मः काव्यज्ञैः स दृष्टान्तो निगद्यते ॥" इति लक्षणात् ॥ १९ ॥

**चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि सा बिभर्ति यान् ।**
**पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः ॥ २० ॥**

चिकुरप्रकरा इति ॥ ते चिकुरप्रकराः केशसमूहाः, जयन्ति सर्वोत्कर्षेण वर्तन्ते । यान् वेत्तीति विदुषी विशेषज्ञा । विदेः शतुर्वसुः । "उगितश्च" इति ङीप् । वसेः सम्प्रसारणम् । सा दमयन्ती, मूर्धनि बिभर्ति । विद्वद्ग्रह एव सर्वस्याप्युत्कर्षहेतुरिति भावः । अत एव पशुना तिरश्चा चमरीमृगेणाप्यपुरस्कृतेनानादृतेन चामरेण चमरीपुच्छेन सह तत्तुलनां तेषां चिकुराणां तुलनां समीकरणं क इच्छतु न कोऽपीत्यर्थः । सम्भावनायां लोट् । अत्र तुलनानिषेधस्यापुरस्कृतपदार्थहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥ २० ॥

**स्वदृशोर्जनयन्ति सान्त्वनां खुरकण्डूयनकैतवान्मृगाः ।**
**जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात् ॥ २१ ॥**

स्वदृशोरिति ॥ मृगाः हरिणाः, तस्या दमयन्त्याः, अखर्वयोरायतयोरीक्षणयोः शोभया कर्त्र्या जितयोरत एव भयादुदयत्प्रमीलयोरुत्पद्यमाननिमीलनयोः स्वदृशोर्निजनयनयोः, खुरैः शफैः । 'शफं क्लीबे खुरः पुमान्' इत्यमरः । कण्डूयनस्य कर्षणस्य कैतवाच्छलात सान्त्वनां जनयन्ति ।

लालनां कुर्वन्ति । यथा लोकेऽपरपराजिता निमीलिताक्षाः स्वजनैर्भयनिवृत्तये करतलास्फालनादिना परिसान्त्व्यन्ते तद्वदिति भावः । अत्र कैतवशब्देन कण्डूयनमपह्नुत्य सान्त्वनारोपादपह्नवभेदः ॥ २१ ॥

**अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।**
**श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥ २२ ॥**

अपीति ॥ हे धरापते, दमो नाम भीमस्यैवात्मजस्तस्य स्वसुर्दमयन्त्याः, लोकयुगं मातापितृकुलयुगं, श्रुतिगामितया वेदप्रसिद्धतया, सुतरां व्यतिभाते परस्परोत्कर्षेण भाति । तथा दृशौ नेत्रे अपि श्रुतिगामितया कर्णान्तविश्रान्ततया व्यतिभाते परस्परोत्कर्षेण भातः । तथा श्रुताः श्रुतिप्रसिद्धाः, ते च ते दृष्टाः लोकप्रसिद्धाश्च विशेषणयोरपि विशेषणविशेष्यभावविवक्षायां विशेषणसमासः । ते रमणीगुणाः स्त्रीधर्मा अपि श्रुतिगामितया जनैः श्रूयमाणतया । 'श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः । सुतरां व्यतिभाते व्यतिहारेण भान्ति । "आत्मनेपदेष्वनतः" इति झस्यादादेशः । सर्वत्र कर्तरि कर्मव्यतिहार इत्यात्मनेपदम् । अदादित्वाच्छपो लुक्, सर्वत्र टेरेत्वम् । अत्र लोकयुगादीनां त्रयाणामपि प्रकृतत्वात्केवलप्रकृतविषयतुल्ययोगिताभेदः ॥ "प्रस्तुताप्रस्तुतानाञ्च केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता" इति लक्षणात् ॥ २२ ॥

**नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे ।**
**अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ २३ ॥**

नलिनमिति ॥ नलिनं पद्मं, मलिनमचारु, विवृण्वती कुर्वाणे पृषतीं मृगीमस्पृशती । असमानत्वाद्दूरादेव परिहरत इत्यर्थः । तदीक्षणे तल्लोचने अञ्जनाञ्चिते कज्जलपरिष्कृते सती, खञ्जनं खञ्जरीटाख्यं, खञ्जनामकः पक्षिविशेषः । 'खञ्जरीटस्तु खञ्जन' इत्यमरः । तमपि रुचिगर्वदुर्विधं चारुत्वगर्वनिःस्वं विदधाते कुर्वाते । सर्वथाप्यनुपमेये इत्यर्थः । 'निःस्वस्तु दुर्विधो

दीनो दरिद्रो दुर्गतोऽपि सः ' इत्यमरः । ईक्षणयोर्नलिनादिमलिनीकरणाद्य-सम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । तया चोपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ २३ ॥

**अधरं किल बिम्बनामकं फलमस्मादिति भव्यमन्वयम् ।**
**लभतेऽधरबिम्बमित्यदः पदमस्या रदनच्छदं वदत् ॥ २४ ॥**

अधरमिति ॥ अधरबिम्बमित्यदःपदं अधरं बिम्बमिवेत्युपमितसमासाश्रयणेन स्त्रीणामधरेषु यत्पदं प्रयुज्यते तदित्यर्थः । अस्याः दमयन्त्याः, रदनच्छदं ओष्ठं, वदद्भिदधत्, तदभिधानाय प्रयुक्तं सदित्यर्थः । बिम्बनामकं फलं बिम्बमस्माद्दमयन्तीरदनच्छदादधरं किल अपकृष्टं खल्विति अधरशब्दस्य अपकृष्टार्थत्वे अधरं बिम्बं यस्मात्तदिति बहुव्रीहिसमासे च सति, भव्यमबाधितमन्वयं वृत्तिपदार्थसंसर्गलक्षणं लभते । अन्यथा, समर्थसमासाश्रयणे " समर्थः पदविधिः " इति समर्थपरिभाषा भज्येत । तर्हि नोपमा स्यादितिभावः । अत्र दमयन्तीदन्तच्छदस्य बिम्बाधरीकरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः, पूर्ववद्ध्वनिश्च ॥ २४ ॥

**हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।**
**कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥ २५ ॥**

हृतसारमिति ॥ इन्दुमण्डलं दमयन्तीवदनाय तन्निर्माणायेत्यर्थः ॥ "क्रियार्थोपपदस्य" इति चतुर्थी । वेधसा हृतसारमुद्धृतमध्यांशमिव । कुतः ? कृतमध्यबिलं विहितमध्यरन्ध्रमत एव धृतो गम्भीरखनीखस्य निम्नमध्यरन्ध्राकाशस्य, नीलिमा नैल्यं येन तत्तथा विलोक्यते । 'खनिः स्त्रियामाकरस्स्यात्' इत्यमरः । "कृदिकारादक्तिनो वा ङीष्वक्तव्यः" इति ङीष् । अत्र कलङ्कापह्नवेन खनीलिमारोपादपह्नव भेदः । स च कृतमध्यबिलमित्येतत्पदार्थ हेतुककाव्यलिङ्गानुप्राणितः । तदपेक्षा चेयं हृतसारमित्युत्प्रेक्षेति सङ्करः । तया चोपमा व्यज्यत इति पूर्ववद्ध्वनिः ॥ २५ ॥

**धृतलाञ्छनगोमयाञ्चनं विधुमालेपनपाण्डरं विधिः ।**
**भ्रमयत्युचितं विदर्भजाननीराजनवर्धमानकम् ॥ २६ ॥**

धृतेति ॥ विधिर्ब्रह्मा, धृतं लाञ्छनमङ्क एव गोमयाञ्जनं मध्यस्थितगोमयसंश्लेषणं येन तम्, आलेपनपाण्डरं निजकान्तिसुधाद्रव्यधवलितमित्यर्थः । विधुं चन्द्रमेव विदर्भजाननस्य वैदर्भीमुखस्य नीराजनवर्धमानकं नीराजनशरावम् । 'शरावो वर्धमानकः' इत्यमरः । किरणदीपकलिकायुक्तमिति भावः । भ्रमयति । उचितम् । लोकोत्तरत्वादिति भावः । एवं नीराजयन्तीति देशाचारः । अत्र विधुतल्लाञ्छनादेर्नीराजनशरावगोमयादित्वेन रूपणात् सावयवरूपकम् ॥ २६ ॥

सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात् ।
अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ २७ ॥

सुषमेति ॥ सुषमा परमा शोभा, सैव विषयः, तस्मिन् परीक्षणे *जलदिव्यशोधने कृते निखिलं पद्मं पद्मजातं, तन्मुखादपादानात्, भङ्गावधित्वादभाजि अभञ्जि, स्वयमेव भग्नमभूदित्यर्थः । स्फुटम् । कर्तरि लुङ् । "भञ्जेश्च चिणि" इति वैभाषिको नकारलोपः । अत एवाधुनापि, भङ्गलक्षणं पराजयचिह्नं सलिलादुन्मज्जनं क्षणमपि नोज्झति न जहाति । जलदिव्योन्मज्जनस्य पराजयलिङ्गत्वस्मरणादिति भावः । उन्मज्जनक्रियानिमित्तेयं भङ्गोत्प्रेक्षा ॥ २७ ॥

धनुषी रतिपञ्चबाणयोरुदिते विश्वजयाय तद्भ्रुवौ ।
नलिके न तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः ॥ २८ ॥

---

* जलदिव्यशोधनं नाम, वादिप्रतिवादिनोर्विवादनिर्णयोपायेष्वेकतममेतत् । तद्यथा—वादी प्रतिवादी वा यः स्वव्यवहारं सत्यापयितुमिच्छति, तेन तावत्पर्यन्तं जलान्तर्मग्नेन भवितव्यं, यावत् बलवता दूरे विक्षिप्तं दण्डमादाय कश्चित्सत्वरं समागच्छति तं देशं, यतः स दण्डो विक्षिप्तः । यदि निमग्नः पुरुषः श्वासं रोद्धुमशक्नुवन् दण्डानयनात् प्राक् सलिलादुन्मज्जति, स पराजितो मन्यते इति प्राचां सङ्केतः । प्रकृते च पद्मानां सलिलोन्मज्जनं, भैमीवदनसुषमाप्राप्तपराजयहेतुकमिति व्याख्यातुराशयः ॥

धनुषीति ॥ तद्भ्रुवौ विश्वजयायोदिते उत्पन्ने रतिपञ्चबाणयोर्धनुषी, नूनमित्यादिव्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । किञ्च, तस्याः दमयन्त्याः, उच्चनासिके उन्नतनासापुटे, त्वयि नालीकानां द्रोणीचापशराणां, विमुक्तिं कामयेते इति तथोक्तयोस्तयोः, शिलिकामिभिक्षाचरेभ्यो ण इति णप्रत्ययः । 'नालीकं पद्मषण्डे स्त्री नालीकः शरशल्ययोः' इति विश्वः । नलिके न द्रोणीचापे न किमिति काकुः । पूर्ववदुत्प्रेक्षा ॥ २८ ॥

**सदृशी तव शूर सा परं जलदुर्गस्थमृणालजिद्भुजा ।**
**अपि मित्रजुषां सरोरुहां गृहयालुः करलीलया श्रियः ॥ २९ ॥**

सदृशीति ॥ हे शूर, जलदुर्गस्थानि मृणालानि जयत इति तज्जितौ भुजौ यस्यास्सा, मित्रजुषामर्कसेविनां, सुहृत्सेविनाञ्च, सहायसम्पन्नानामपीत्यर्थः । 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः । सरोरुहां श्रियः शोभाः, सम्पदश्च । "न लोक" इत्यादिना षष्ठीप्रतिषेधः । करलीलया भुजविलासेन भुजव्यापारेण बलिग्रहणेन च । 'बलिहस्तांशवः कराः, लीलाविलासक्रियायोः, इति चामरः । गृहयालुः ग्रहीता । "ग्रहू ग्रहणे" इति धातोश्चौरादिकात् "स्पृहिगृहि" इत्यादिना आलुच्प्रत्ययः । "अयामन्त" इत्यादिना णेरयादेशः । सा दमयन्ती, तव परमत्यन्तं सदृशी अनुरूपेत्युपमालङ्कारः । शूरस्य शूरैव भार्या भवितुमर्हतीति भावः ॥ २९ ॥

**वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी ।**
**विधिनापि न रोमरेखया कृतसीम्नी प्रविभज्य रज्यतः ॥३०॥**

वयसी इति ॥ सुदृशि दमयन्त्यां, स्वाभिविधिं स्वव्याप्तिं विधित्सुनी विधातुमिच्छती । अहमहमिकया स्वयमेवाक्रमितुमिच्छतीत्यर्थः । शिशुतातदुत्तरे बाल्ययौवने वयसी विधिना सीमाभिज्ञेन रोमरेखया सीमाचिह्नेन प्रविभज्य, रोमराजेः प्रागेवात्र शैशवेन स्थातव्यम् । ततःपरं यौवनेनेति कालतो विभागं कृत्वा कृतसीम्नी कृतमर्यादे अपि । "विभाषा ङ्यियोः"

इत्यल्लोपः । न रज्यतः न सन्तुष्यतः, रम्यं वस्तु दुस्त्यजमिति भावः । एतेन वयःसन्धिरुक्ता । अत्र प्रस्तुतयोर्विशेषणसाम्यादप्रस्तुतविवादप्रतीतेः समासोक्तिरलङ्कारः ॥ ३० ॥

**अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।**
**स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥३१॥**

सम्प्रति यौवनमेवाश्रित्य आह—अपीति । कान्तिझरैर्लावण्यप्रवाहैः, अगाधतां दुरवगाहतां गमिते तद्वपुषि दमयन्तीशरीरे, प्रसर्पतोस्तरतोः, स्मरयौवनयोर्द्वयोरपि, उभौ कुचौ प्लवस्योन्मज्जनस्य कुम्भौ प्लवनार्थौ कुम्भावित्यर्थः । प्रकृतिविकारभावाभावादश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । लोके तरद्भिः, अनिमज्जनाय कुम्भादिकमवष्टभ्यत इति प्रसिद्धम् । भवतः खलु । अत्र कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्यं कुचयोश्चातिवृद्धिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ३१ ॥

**कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।**
**स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ॥३२॥**

कलश इति ॥ निजहेतुदण्डजः स्वनिमित्तकारणजन्यः, चक्रभ्रमकारिता कुलालभाण्डभ्रमणजनकत्वं, सैव गुणो धर्मो रूपादिश्च । 'गुणः प्रधाने रूपादौ' इत्यमरः । सः कलशे किमु दण्डकार्ये कलशे सङ्क्रान्तः किमु इत्यर्थः । कुतः यद्यस्मात् स कलशः तस्या दमयन्त्याः उच्चकुचौ भवन् तत्कुचात्मना परिणतः सन् प्रभाझरे लावण्यप्रवाहे. चक्रवाकभ्रान्ति, कुलालदण्डभ्रमणञ्चातनोति 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः ।' 'ग्रामजाले कुलालस्य भाण्डे राष्ट्राख्ययोरपि ।' इत्युभयत्रापि विश्वः । अत्र समवायिकारणगुणा रूपादयः कार्ये सङ्क्रामन्ति न निमित्तगुणा इति तार्किकानां समये स्थिते, गुण इति चक्रभ्रम इति चोभयत्रापि वाच्यप्रतीयमानयोः, अभेदाध्यवसायेन 'स तदुच्चकुचौ भवन्निति, कुचकलशयोरभेदातिशयोक्त्युत्थापिता झरचक्रभ्रमात्मकक्रियानिमित्ता कुचात्मनि कलशे कार्ये चक्रभ्रम-

कारितालक्षणनिमित्तकारणगुणसङ्क्रमणोत्प्रेक्षेति सङ्क्षेपः । तार्किकसमये विरोधात् विरोधाभासोऽलङ्कार इति कैश्चिदुक्तम् । तदेतदत्यन्ताश्रुतचरमलङ्कारदश्वानः शृण्वन्तु ॥ ३२ ॥

भजते खलु षण्मुखं शिखी चिकुरैर्निर्मितबर्हगर्हणः ।
अपि जम्भरिपुं दमस्वसुर्जितकुम्भः कुचशोभयेभराट् ॥३३॥

भजत इति ॥ दमस्वसुर्दमयन्त्याः, चिकुरैर्निर्मितबर्हगर्हणः कृतपिच्छनिन्दः, जितबर्ह इत्यर्थः । शिखी मयूरः षण्मुखं विशाखं भजते सेवते खलु । तथा कुचशोभया जितकुम्भ इभराडैरावतोऽपि जम्भरिपुमिन्द्रं भजते । परपरिभूताः प्राणत्राणाय प्रबलमन्यमाश्रयन्त इति प्रसिद्धम् । अत्र शिख्यैरावणयोः षण्मुखजम्भारिभजनस्य जितबर्हत्वजितकुम्भत्वपदार्थहेतुकत्वात्तद्धेतुके काव्यलिङ्गे तदसम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिश्च ॥ ३३ ॥

उदरं नतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेन मुष्टिना ।
चतुरङ्गुलिमध्यनिर्गतत्रिवलिभ्राजि कृतं दमस्वसुः ॥ ३४ ॥

उदरमिति ॥ दमस्वसुरुदरं, नतमध्यं निम्नमध्यप्रदेशं पृष्ठं यस्योदरस्य तस्य भावस्तत्ता तया स्फुरत् दृढग्रहणात् पृष्ठफलके स्फुटीभवदङ्गुष्ठपदमङ्गुष्ठन्यासस्थानं यस्य तेन मुष्टिना करणेन, चतसृणामङ्गुलीनां समाहारश्चतुरङ्गुली, "तद्धितार्थ" इत्यादिना समाहारद्विगुरेकवचनन्पुंसकत्वे । तस्य मध्येभ्योऽन्तरालेभ्यो निर्गतं यत् त्रिवलिपूर्ववत्समासादिकार्यं, यत्तूक्तं वामनेन त्रिवलिशब्दः "संज्ञा चेत्" इति सूत्रेण सप्तर्षय इत्यादिवत्, "दिक्सङ्ख्ये संज्ञायाम्" इति संज्ञायां द्विगुरिति । तदपि चेत्करणसामर्थ्यात् त्रिवल्य इति बहुवचनप्रयोगदर्शने स्थितं गतिमात्रं न सार्वत्रिकमिति प्रतीमः । तेन भ्राजत इति तद्भ्राजि, वलित्रयशोभि कृतमित्युत्प्रेक्षा । कौतुकिनेति शेषः । मुष्टिग्राह्यमध्येयमित्यर्थः । मुष्टिग्रहणादङ्गुष्ठनोदनात् पृष्ठमध्ये निम्नता उदरे च चतुरङ्गुलिनोदनाद्वलित्रयाविर्भावश्चेत्युत्प्रेक्षते ॥ ३४ ॥

उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु ।
धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः ॥ ३५ ॥

उदरमिति ॥ कोऽपि कुतुकी दमस्वसुरुदरं मुष्टिना परिमाति किमु परिच्छिनत्ति किमित्युत्प्रेक्षा । कुतः ? यद्यस्मात् सहेमकाञ्चिभिर्बलिभिर्हेमकाञ्च्या सह चतसृभिस्त्रिवलिभिरित्यर्थः । एतस्याः कनकसावर्ण्यं सूचितम् । धृतं तस्य मातुश्चतुरङ्गुल्यङ्गुलिचतुष्टयं येन तदिव भातीत्युत्प्रेक्षा । अत्रोत्प्रेक्षयोर्हेतुहेतुमद्भूतयोरङ्गाङ्गिभावेन सजातीयसङ्करः । पूर्वश्लोके बलीनां तिसृणां चतुरङ्गुलिमध्यनिर्गतत्वमुत्प्रेक्षितम् ॥ इह तासामेव काञ्चीसहितानाञ्चतुरंगुलित्वमुत्प्रेक्षत इति भेदः । प्रेक्षितुरिति भावः ॥ ३९ ॥

पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेकचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥ ३६ ॥

पृथ्विवति ॥ पृथु वर्तुलञ्च तस्याः नितम्बं करोतीति ॥ नितम्बकृन्नितम्बं कृतवान्, विधिः ब्रह्मा, मिहिरस्यन्दनशिल्पशिक्षया रविरथनिर्माणाभ्यासपाटवेन, एककं एकाकि, "एकादाकिनिच्चासहाय" इति चकारात् कप्रत्ययः । तेन चक्रेण चरतीति तच्चारिणं मान्मथं रथं निर्मित्सति किमु, सूर्यस्येव मन्मथस्यापि एकचक्रं रथं निर्मातुमिच्छति किमित्युत्प्रेक्षा । अन्यथा किमर्थमिदं नितम्बनिर्माणमिति भावः । मातेः सन्नन्ताल्लट् । " सनि मीमा " इत्यादिना इसादेशः । "सस्यार्धधातुक" इति सकारस्य तकारः । " अत्र लोपोऽभ्यासस्य " इत्यभ्यासलोपः ॥ ३६ ॥

तरुमूरुयुगेन सुन्दरी किमु रम्भां परिणाहिना परम् ।
तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥

तरुमिति ॥ सुन्दरी दमस्वसा, परिणाहिना विपुलेन, ऊरुयुगेन रम्भां रम्भां नाम तरुं परं, तरुमेव । "न लोक" इत्यादिना षष्ठीप्रतिषेधः । जिष्णुः किमु । किन्तु, धनदापत्यस्य नलकूबरस्य, तपसः फलस्तनीं फलभूतकुचां, तां रम्भां नाम तरुणीमपि जिष्णुरेव । 'रम्भा कदल्यप्सरसोः'

इति विश्वः । रम्भे इव रम्भाया इव चोरू यस्याः सा इत्युभयथा रम्भोरूरित्यर्थः ॥ ३७ ॥

जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः ।
ध्रुवमेत्य रुतस्सहंसकीकुरुतस्ते विधिपत्रदम्पती ॥ ३८ ॥

जलजे इति ॥ ये जलजे द्विपद्मे, रविसेवया सूर्योपासनयेव, एतस्याः पद्मतां चरणत्वमेव पदं प्रतिष्ठामवापतुः । ते जलजे कर्मभूते, विधिपत्रदम्पती द्वन्द्वचारिणौ ब्रह्मवाहनहंसौ, एत्यागत्य, रुतः रवात् कूजनादित्यर्थः । रौतेः सम्पदादित्वात् क्विपि तुगागमः । सहंसकी सकटकी सहंसकी च कुरुतः । अभूततद्भावे च्विः । 'हंसकः पादकटकः' इत्यमरः । हंसपक्षे वैभाषिकः कप्रत्ययः । ध्रुवमित्युत्प्रेक्षायाम् । पद्महंसयोरविनाभावात्कयोश्चिद्दिव्यपद्मयोस्तत्पदत्वमुत्प्रेक्ष्य दिव्यहंसयोरेव हंसकत्वं चोत्प्रेक्षते॥

श्रितपुण्यसरस्सरित्कथं न समाधिक्षपिताखिलक्षपम् ।
जलजं गतिमेतु मञ्जुलां दममन्तीपदनाम्नि जन्मनि ॥३९॥

श्रितेति ॥ श्रिताः सेविताः, पुण्याः सरः सरितः मानसादीनि सरांसि गङ्गाद्याः सरितश्च येन तत समाधिना ध्यानेन निमीलनेन क्षपिताखिलक्षपं यापितसर्वरात्रं जलजं दमयन्तीपदमिति नाम यस्मिन् जन्मनि, मञ्जुलां गतिं रम्यगतिं उत्तमदशाञ्च । 'गतिर्मार्गे दशायाञ्च' इति विश्वः । कथं नैतु एत्वेवेत्यर्थः । पदस्य गतिसाधनत्वात्तत्रापि दमयन्तीसम्बन्धाच्चोभयगतिलाभः । तथापि जन्मान्तरेऽपि सर्वथा तपः फलितमिति भावः । सम्भावनायां लोट् ॥ ३९ ॥

सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोस्सदसत्संशयगोचरोदरी ॥ ४० ॥

अथ कथं त्वमेनां वेत्सीत्यत आह—सरसीरिति ॥ सरसीः सरांसि परिशीलितुं परिचेतुं, तत्र विहर्तुमित्यर्थः । चुरादिणेरनित्यत्वादण्यन्तप्रयोगः। गमिर्गमनं शब्दपरत्वकेनार्थो गम्यते । तस्य कर्मीकृताः कर्मकारकीकृताः,

नैके अनेके, नञर्थस्य नशब्दस्य, 'सुप्सुपा' इति समासः । नितरां वर्तन्ते जना एष्विति नीवृतः, जनपदाः येन तेन क्रान्तानेकदेशेनेत्यर्थः । "नहिवृति" इत्यादिना दीर्घः । मया सदसद्वेति संशयगोचरः सन्देहास्पदं उदरं यस्याः सा कृशोदरीत्यर्थः । नासिकोदरेत्यादिना ङीप् । सा दमयन्ती दृशोरतिथित्वमनायि स्वविषयतां नीता दृष्टेत्यर्थः । नयतेः कर्मणि लुङ् ॥ ४० ॥

अवधृत्य दिवोऽपि यौवतैर्न सहाधीतवतीमिमामहम् ।
कतमस्तु विधातुराशये पतिरस्या वसतीत्यचिन्तयम् ॥४१॥

अवधृत्येति ॥ अहमिमां दमयन्तीं, दिवः स्वर्गस्य सम्बन्धिभिर्यौवतैः युवतिसमूहैरपि । 'गार्भिणं यौवतं गणे' इत्यमरः । भिक्षादित्वात् समूहार्थेऽणप्रत्ययः । तत्राप्यस्य युवतीति स्त्रीप्रत्ययान्तस्यैव प्रकृतित्वेन तद्ग्रहणात्तत्सामर्थ्यादेव "भस्याढे तद्धिते" इति पुंवद्भाव इति वृत्तिकारः । न सहाधीतवतीमसदृशीं, ततोऽप्यधिकसुन्दरीमित्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समास इति वामनः । अवधृत्य निश्चित्य विधातुः ब्रह्मणः, आशये हृदि अस्याः पतिः कतमस्तु कतमो वा वसतीत्यचिन्तयं तदैवेति शेषः ॥४१॥

अनुरूपममुं निरूपयन्नथ सर्वेष्वपि पूर्वपक्षताम् ।
युवसु व्यपनेतुमक्षमस्त्वयि सिद्धान्तधियं न्यवेशयम् ॥४२॥

अनुरूपमिति ॥ अथेदानीमनुरूपं योग्यममुं त्वां निरूपयन्नस्याः पतित्वेनालोचयन्, सर्वेष्वपि युवसु पूर्वपक्षतां दूष्यकोटित्वं व्यपनेतुमक्षमस्सन् त्वयि सिद्धान्तधियं न्यवेशयम् । त्वमेवास्याः पतिरिति निरणैषमित्यर्थः । अयमेव विधातुरप्याशय इति भावः ॥ ४२ ॥

अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे ।
चिरमप्यवलोकिताद्य सा स्मृतिमारूढवती शुचिस्मिता ॥४३

अथ त्वद्रूपदर्शनमेव तत्स्मारकमित्याह—अनयेति ॥ चिरमवलोकितापि सा शुचिस्मिता सुन्दरी अद्याधुना हस्तेन निर्दिशन्नाह—अनया तव रूपसीमया सौन्दर्यकाष्ठया कृतसंस्कारविबोधनस्य उद्बुद्धसंस्कारस्य स्मृतिमारूढवती स्मृतिपथं गता । सदृशदर्शनं स्मारकमित्यर्थः ॥ ४३ ॥

त्वयि वीर विराजते परं दमयन्तीकिलकिञ्चितं किल ।
तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥ ४४ ॥

ततः किमत आह—त्वयीत्यादि ॥ हे वीर, दमयन्त्याः किलकिञ्चितम् । "क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्" इत्युक्तलक्षणलक्षितशृङ्गारचेष्टितं त्वयि परं, त्वय्येव विराजते किल शोभते खलु । तथाहि मणिहारावलेर्मुक्ताहारपङ्क्तेः, रामणीयकं रमणीयत्वं, योपधाद्गुरूपोत्तमाद्वुञ् । तरुणीस्तन एव दीप्यते नान्यत्रेत्यर्थः । स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति प्रायग्रहणादेकवचनप्रयोगः । अत्र हारकिलकिञ्चितयोरुपमानोपमेययोर्वाक्यद्वये बिम्बप्रतिबिम्बतया स्तननृपयोः समानधर्मत्वोक्तेर्दृष्टान्तालङ्कारः । लक्षणन्तूक्तम् ॥ ४४ ॥

तव रूपमिदं तया विना विफलं पुष्पमिवावकेशिनः ।
इयमृद्धधना वृथावनिः स्ववनी सम्प्रवदत्पिकापि का ॥४५॥

तवेति ॥ हे वीर, तवेदं रूपं सौन्दर्यं तया दमयन्त्या विना अवकेशिनो वन्ध्यवृक्षस्य । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । पुष्पमिव विफलं निरर्थकम् । ऋद्धधना सम्पूर्णवित्ता इयमवनिर्वृथा निरर्थका । सम्प्रवदत्पिका कूजत्कोकिला स्ववनी निजोद्यानमपि । ङीप् । का तुच्छा निरर्थकेत्यर्थः । तद्योगे तु सर्वं सफलमिति भावः । 'किं वितर्के परिप्रश्ने क्षेपे निन्दापराधयोः' इति विश्वः । अत्र नलरूपावनिवनीनां दमयन्त्या विना रम्यतानिषेधाद्विनोक्तिरलङ्कारः । "विना सम्बन्धि यत्किञ्चिद्यत्रान्यत्र परा भवेत् । रम्यतारम्यता वा स्यात् सा विनोक्तिरनुस्मृता ॥" इति लक्षणात् । यस्याश्च पुष्पमिवेत्युपमया संसृष्टिः ॥ ४५ ॥

अनयामरकाम्यमानया सह योगस्सुलभस्तु न त्वया ।
घनसंवृतयाम्बुदागमे कुमुदेनेव निशाकरत्विषा ॥ ४६ ॥

अत्र स्वापेक्षां दर्शयितुं तस्याः दौर्लभ्यमाह—अनयेति ॥ अमरैः इन्द्रादिभिः, काम्यमानयाभिलष्यमाणया दमयन्त्या सह योगः अम्बुदागमे

घनसंवृतया मेघावृतया, निशाकरत्विषा सह योगः कुमुदेनेव त्वया न सुलभो दुर्लभ इत्यर्थः। अत्र तत्संयोगदौर्लभ्यस्य अमरकामनपदार्थहेतुकत्वात्काव्यलिङ्गभेदः। तत्सापेक्षा चेयमुपमेति सङ्करः॥ ४६॥

तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम्।
हृदये निहितस्तया भवानपि नेन्द्रेण यथापनीयते॥ ४७॥

अत्र का गतिरत आह—तदिति॥ तत तस्मात्, कार्यस्य सप्रतिबन्धत्वादहं दमयन्त्याः सविधे समीपे तथा तथा तव स्तवं स्तोत्रं विदधे विधास्य इत्यर्थः। सामीप्ये वर्तमानप्रत्ययः। यथा तया हृदये निहितो भवानिन्द्रेणापि नापनीयते नेतुमशक्य इत्यर्थः। यथेन्द्रादिप्रलोभितापि त्वय्येव गाढानुरागा स्यात्तथा करिष्यामीत्यर्थः॥ ४७॥

तव सम्मतिमत्र केवलामधिगन्तुं धिगिदं निवेदितम्।
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्॥ ४८॥

तर्हि तथैव क्रियतां किं निवेदनेनेत्यत आह—तवेति॥ अत्रास्मिन् कार्ये केवलामेकां तव सम्मतिमङ्गीकारमधिगन्तुमिदं निवेदितं निवेदनं धिक्। तथा हि—साधवो निजोपयोगितां स्वोपकारित्वं फलेन कार्येण ब्रुवते बोधयन्ति। किन्तु कण्ठेन वाग्वृत्त्या न ब्रुवते। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ४८॥

तदिदं विशदं वचोमृतं परिपीयाभ्युदितं द्विजाधिपात्।
अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम्॥ ४९॥

तदिति॥ स नलो द्विजाधिपाद्धंसाच्चन्द्राच्चाभ्युदितमाविर्भूतं विशदं प्रसन्नमवदातञ्च तत्पूर्वोक्तमिदमनुभूयमानं वच एवामृतमिति रूपकम्। तत्परिपीय। अत एवातितृप्ततयातिसौहित्येन तस्य वचोऽमृतस्य उद्गारमिव सितं स्मितं विनिर्ममे निर्मितवान्। माङः कर्तरि लिट्। अतितृप्तस्य किञ्चिन्निस्सार उद्गारः। सितत्वसाम्यात्, स्मितस्य वागमृतोद्गारत्वोत्प्रेक्षा॥ ४९॥

परिमृज्य भुजाग्रजन्मना पतगं कोकनदेन नैषधः ।
मृदु तस्य मुदेऽकिरद्गिरः प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥

परिमृज्येति ॥ निषधानां राजा नैषधः नलः । जनपदशब्दात् क्षत्रियादञ् । भुजाग्रजन्मना कोकनदेन पाणिशोणपङ्कजेनेत्यर्थः । पतगं हंसं परिमृज्य तस्य हंसस्य, मुदे हर्षाय प्रियवादानामेवामृतानां कूपो निधिः कण्ठो वागिन्द्रियं तज्जाः तज्जन्याः, गिरो मृदु यथा तथा । अकिरत् प्रियवाक्यामृतैरसिञ्चदित्यर्थः । अत्र भुजाग्रजन्मना कोकनदेनेति विषयस्य पाणेर्निगरणेन विषयिणः कोकनदस्यैव उपनिबन्धनादतिशयोक्तिः । "विषयस्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिसम्मता" इति लक्षणात् । सा च पाणिकोकनदयोरभेदोक्तेरभेदरूपा । तस्याः प्रियवादामृतकूपकण्ठेति रूपकसंसृष्टिः ॥ ६० ॥

न तुलाविषये तवाकृतिर्न वचोवर्त्मनि ते सुशीलता ।
त्वदुदाहरणाऽऽकृतौ गुणा इति सामुद्रिकसारमुद्रणा ॥ ५१ ॥

नेति ॥ हे हंस, तवाकृतिराकारस्तुलाविषये सादृश्यभूमौ न, न वर्तते असदृशीत्यर्थः । ते तव, सुशीलता सौशील्यं वचोवर्त्मनि न, न वर्तते वक्तुमशक्येत्यर्थः । अत एवाकृतौ गुणाः 'यत्राकृतिस्तत्र गुणाः' इति सामुद्रिकाणां या सारमुद्रणा सिद्धान्तप्रतिपादनं सा त्वमेवोदाहरणं यस्याः सा तथोक्ता । आकृतिसौशील्ययोस्त्वय्येव सामानाधिकरण्यदर्शनादिति भावः । अत एवोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः ॥ ६१ ॥

न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा ।
न परं पथि पक्षपातिताऽनवलम्बे किमु मादृशेऽपि सा ॥ ५२ ॥

नेति ॥ ननु हंस, तवेयं तावकी । "युष्मदस्मदोरन्यतरस्यां खञ् च" इति चकारादण्प्रत्यये ङीप् । "तवकममकावेकवचने" इति तवकादेशः । तनुः परं मूर्तिरेव सुवर्णमयी हिरण्मयी न । किन्तु, वागपि तथा सुवर्णमयी

शोभनाक्षरमयीत्यर्थः । अनवलम्बे निरवलम्बे पथि परं आकाश एव पक्षपातिता पक्षपातित्वं न । किमु किं त्वित्यर्थः । निपातानामनेकार्थत्वात् । अनवलम्बे निराधारे मादृशेऽपि सा पक्षपातिता स्नेहवत्तेत्यर्थः । अत्र तनुवाचोः प्रकृताप्रकृतयोः सुवर्णमयीति शब्दश्लेषः । एवं पथि मादृशेऽपि पक्षपातितेति सजातीयसंसृष्टिः । तया चोपमा व्यज्यते ॥५२॥

भृशतापभृता मया भवान्मरुदासादि तुषारसारवान् ।
धनिनामितरस्सतां पुनर्गुणवत्सन्निधिरेव सन्निधिः ॥ ५३ ॥

भृशेति ॥ भृशतापभृता अतिसन्तापभाजा मया भवान् तुषारैः शीकरैः सारवानुत्कृष्टो मरुन्मारुतः, ( सन् ) आसादि प्राप्तः सन्तापहारित्वादिति भावः । तथा हि धनिनां धनिकानां कुबेरादीनामितरः पद्मशङ्खादिस्संज्ञश्चासौ निधिश्चेति सन्निधिः, सतां विदुषां पुनर्गुणवतां गुणिनां सन्निधिस्सान्निध्यमेव सन्निधिर्महानिधिः सन्तापहारित्वात्, त्वमेव शिशिरमारुतः अन्यस्तु दहन एवेति भावः । दृष्टान्तालङ्कारः ॥ ५३ ॥

शतशश्श्रुतिमागतैव सा त्रिजगन्मोहमहौषधिर्मम ।
अमुना तव शंसितेन तु स्वदृशैवाभिहितामवैमि ताम् ॥ ५४ ॥

शतश इति ॥ त्रिजगतस्त्रैलोक्यस्य मोहे मोहने महौषधिः महौषधमिति रूपकम् । सा दमयन्ती शतशो मम श्रुतिं श्रोत्रमागतैव । अधुना तव शंसितेन कथनेन तु स्वदृशा स्वदृष्ट्यैवे अभिहितां बोधितां तामवैमि साक्षाद्दृष्टां मन्ये । आप्तोक्तिप्रामाण्यादिति भावः ॥ ५४ ॥

अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम् ।
सविधेऽपि न सूक्ष्मसाक्षिणी वदनालङ्कृतिमात्रमक्षिणी ॥५५॥

अथ स्वदृष्टेरप्याप्तदृष्टिरेव गरीयसीत्याह—अखिलमिति ॥ सुहृदा आप्तमुखेन च स्वहृदा स्वान्तःकरणेन च स्वहृद्ग्रहणं तद्वत्सुहृदः श्रद्धेयत्वज्ञापनार्थं अखिलं कृत्स्नमर्थमनाविलमसन्दिग्धमविपर्यस्तं यथा तथा पश्यतामवधारयतां विदुषां विवेकिनां सविधे पुरोऽपि नसूक्ष्मसाक्षिणी असू-

क्ष्मार्थदर्शिनी । 'सुप्सुपा' इति समासः । अक्षिणी वदनालङ्कृतिमात्रम्, न तु दूरसूक्ष्मार्थदर्शनोपयोगिनी इत्यर्थः ॥ ५५ ॥

**अमितं मधु तत्कथा मम श्रवणप्राघुणिकीकृता जनैः ।**
**मदनानलबोधने भवेत्खग धाय्या धिगधैर्यधारिणः ॥ ५६ ॥**

अमितमिति ॥ हे खग, जनैर्विदर्भागतजनैर्मम श्रवणप्राघुणिकीकृता कर्णातिथीकृता, तद्विषयीकृतेत्यर्थः । 'आवेशिकः प्राघुणिक आगन्तुरतिथिस्तथा' इति हलायुधः । अमितमपरिमितं मधु क्षौद्रं तद्वदतिमधुरेत्यर्थः । तत्कथा तद्गुणवर्णना अधैर्यधारिणोऽत्यन्ताधीरस्य मम मदनानलबोधने कामाग्निप्रज्वलने धाय्या सामिधेनी भवेत् । 'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः । "पाय्यसान्नाय्य" इत्यादिना निपातः । धिक् वाक्यार्थो निन्द्यः । अत्र तत्कथायाः धाय्यात्मना प्रकृतमदनाग्नीन्धनोपयोगात् परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इत्यलङ्कारसर्वस्वकारः ॥ ५६ ॥

**विषमो मलयाहिमण्डलीविषफूत्कारमयो मयोहितः ।**
**बत कालकलत्रदिग्भवः पवनस्तद्विरहानलैधसा ॥ ५७ ॥**

विषम इति ॥ विषमः प्रतिकूलः कालकलत्रदिग्भवोऽन्तकदिग्भवः, प्राणहर इति भावः । पवनो दक्षिणमारुतः, तद्विरहानलैधसा दमयन्तीविरहाग्निसमिधा तद्दाह्येनेत्यर्थः । मया मलये मलयाचले, या अहिमण्डली सर्पसङ्घः तस्याः विषफूत्कारमयः, ऊहितः तद्रूप इति तर्कित इत्यर्थः । लोके च अग्निरेधांसि निधाय फूत्कारवातैर्ध्माप्यत इति भावः । बतेति खेदे । विरहानलैधसेति रूपकोत्थापितेयं दक्षिणपवनस्य मलयाहिमण्डलीफूत्कारत्वोत्प्रेक्षेति सङ्करः ॥ ५७ ॥

**प्रतिमासमसौ निशाकरः खग सङ्गच्छति यद्दिनाधिपम् ।**
**किमु तीव्रतरैस्ततः करैर्मम दाहाय स धैर्यतस्करैः ॥ ५८ ॥**

प्रतिमासमिति ॥ हे खग, असौ निशाकरः मासि मासि प्रतिमासम्, प्रतिदर्शमित्यर्थः । वीप्सायामव्ययीभावः । दिनाधिपं सूर्यं

सङ्गच्छति प्राप्नोतीति यत् । ततः प्राप्तेः स निशाकरस्तीव्रतरैरत एव धैर्यतस्करैर्मद्धैर्यहारिभिः करैः सौरैः तत आनीतैर्मम दाहाय सङ्गच्छती-त्यनुषङ्गः । किमुशब्द उत्प्रेक्षायाम् । अत्र सङ्गमनस्य दाहार्थत्वोत्प्रेक्षणात् फलोत्प्रेक्षा ॥ ५८ ॥

**कुसुमानि यदि स्मरेषवो न तु वज्रं विषवल्लिजानि तत् ।**
**हृदयं यदमूमुहन्नमूर्मम यच्चातितरामतीतपन् ॥ ५९ ॥**

कुसुमानीति ॥ स्मरेषवः यदि कुसुमान्येव, वज्रमशनिस्तु न, सद्यो मरणाभावादिति भावः । तर्हि विषवल्लिजानि विषलतोद्भवानि । यद्यस्मादमूः स्मरेषवः । 'पत्री रोप इषुर्द्वयोः' इति स्त्रीलिङ्गता, मम हृदय-ममूमुहन्नमूर्छयन् । मुह्यतेर्णौ चङ् । यद्यस्मादतितरामतिमात्रम् । अव्य-यादाम्प्रत्ययः । अतीतपन् तापयन्ति स्म च । तपतेर्णौ चङ् । मोह-तापलक्षणविषकार्यदर्शनाद्विषवल्लिजत्वोत्प्रेक्षा ॥ ५९ ॥

**तदिहानवधौ निमज्जतो मम कन्दर्पशराधिनीरधौ ।**
**भव पोत इवावलम्बनं विधिनाकस्मिकसृष्टसन्निधिः ॥ ६० ॥**

तदिति ॥ तत्तस्मादिहास्मिन्ननवधौ अपारे कन्दर्पशरैर्य आधिर्मनो-व्यथा । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । तस्मिन्नेव नीरधौ समुद्रे निमज्जतोऽन्तर्गतस्य मम विधिना दैवेन अकस्मादकाण्डे भवमाकस्मिकम् । अध्यात्मादित्वात् ठक् । अव्ययानां भमात्रे टिलोपः । तद्यथा तथा सृष्टसन्निधिः कृतसन्निधानं भाग्यादागत इत्यर्थः । त्वं पोतो यानपात्र-मिव । 'यानपात्रं तु पोतः' इत्यमरः । अवलम्बनं भव ॥ ६० ॥

**अथवा भवतः प्रवर्तना न कथं पिष्टमियं पिनष्टि नः ।**
**स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता ॥ ६१ ॥**

अथ वेति ॥ अथवा इयं नोऽस्माकं सम्बन्धिनी । उभयप्राप्तौ कर्मणि इति नियमात् कर्तरि कृद्योगे षष्ठीनिषेधेऽपि शेषषष्ठीपर्यवसानात् कर्त्रर्थलाभः । भवतः । उभयप्राप्तौ कर्मणीति षष्ठी । प्रवर्तना प्रेरणा ण्यासश्रन्थो युच् ।

कथं पिष्टं न पिनष्टि, स्वतः प्रवृत्तविषयत्वात् पिष्टपेषणकल्पेत्यर्थः । हि यस्मात् ग्रहणानां याथार्थ्यं यथा प्रामाण्यमिव, स्वतः सर्वप्रमाणानां प्रामाण्यमिव 'गृह्यतां जाता मनीषा स्वत एव मानम्' इति मीमांसकाः । सतां परार्थता परार्थप्रवृत्तिः स्वत एव न तु परतः । उपमासंसृष्टोऽर्थान्तरन्यासः ॥ ६१ ॥

तव वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः ।
अधिसाधय साधयेप्सितं स्मरणीयास्समये वयं वयः ॥ ६२ ॥

तवेति ॥ हे वयः खग तव वर्त्मनि शिवं मङ्गलं वर्ततां त्वरितं क्षिप्रमेव पुनः समागमोस्तु अधिसाधय गच्छ ईप्सितमिष्टं साधय सम्पादय समये कार्यकाले वयं स्मरणीयाः अनन्यगामि कार्यं कुर्यादित्यर्थः ॥ ६२ ॥

इति तं स विसृज्य धैर्य्यवान् नृपतिस्सूनृतवाग्बृहस्पतिः ।
अविशद्वनवेश्म विस्मितश्श्रुतिलग्नैः कलहंसशंसितैः ॥ ६३ ॥

इतीति ॥ धैर्यवानुपायलाभात् सधैर्यः सूनृतवाक्षु सत्यप्रियवादेषु बृहस्पतिः तथा प्रगल्भ इत्यर्थः । 'सूनृतं प्रियसत्यवाक्' इत्यमरः । स नृपतिरितीत्थं तं हंसं विसृज्य श्रुतिलग्नैः श्रोत्रप्रविष्टैः कलहंसस्य शंसितैर्विस्मितः सन् वनवेश्म वनस्थांविहारगृहमविशत् ॥ ६३ ॥

अथ भीमसुतावलोकनैस्सफलं कर्तुमहस्तदेव सः ।
क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययौ ॥ ६४ ॥

अथेति ॥ अथ सोऽण्डजो हंसस्तदहरेव भीमसुतायाः भैम्याः अवलोकनैः सफलं कर्तुं तस्मिन्नेवाहनि तां द्रष्टुमित्यर्थः । क्षितिमण्डलमण्डनायितं भूमण्डलस्यालङ्कारभूतं कुण्डिनं कुण्डिनाख्यं नगरं ययौ ॥ ६४ ॥

प्रथमं पथि लोचनातिथिं पथिकप्रार्थितसिद्धिशंसिनम् ।
कलशं जलसंभृतं पुरः कलहंसः कलयांबभूव सः ॥ ६५ ॥

अथ श्लोकत्रयेण शुभनिमित्तान्याह—प्रथममित्यादिना ॥ स कलहंसः प्रथममादौ पथि लोचनातिथिं दृष्टिप्रियं पथिकानां प्रस्थातॄणां प्रार्थितस्य

इष्टार्थस्य, सिद्धिशंसिनं सिद्धिसूचकं जलसंभृतं जलपूर्णं कलशम्, पूर्णकुम्भं पुरोऽग्रे कलयांबभूव ददर्श ॥ ६५ ॥

**अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसं गतम् ।**
**स विलासवनेऽवनीभुजः फलमैक्षिष्ट रसालसङ्गतम् ॥ ६६ ॥**

अवलम्ब्येति ॥ स हंसो दिदृक्षया स्वगन्तव्यमार्गालोकनेच्छया अम्बरे क्षणमाश्चर्यरसेन तद्वस्तुदर्शननिमित्तेनाद्भुतरसेनालसं मन्दं गतं गतिमवलम्ब्य महीभुजो नलस्य विलासवने विहारवने रसालेन चूतवृक्षेण सङ्गतं सम्बद्धम् । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । फलमैक्षिष्ट ईक्षितवान् ॥ ६६ ॥

**नभसः कलभैरुपाश्रितं जलदैर्भूरितरक्षुपन्नगम् ।**
**स ददर्श पतङ्गपुङ्गवो विटपच्छन्नतरक्षुपं नगम् ॥ ६७ ॥**

नभस इति ॥ पुमान् गौः वृषभः, विशेषणसमासः । "गोरतद्धितलुकि" इति समासान्तष्टच् । स इव पतङ्गः पतङ्गपुङ्गवः पक्षिश्रेष्ठः उपमितसमासः । नभसः कलभैः खेचरकरिकल्पैरित्यर्थः । जलदैरुपाश्रितं व्याप्तम् । भूयः बहवः तरक्षवो मृगादनाः पन्नगा यस्य तम् । विटपैः शाखाविस्तारेण । 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः । छन्नतराः अतिशयेन छादिताः क्षुपाः ह्रस्वशाखा यस्य तं 'ह्रस्वशाखा शिफः क्षुपः' इत्यमरः । तं नगं पर्वतं ददर्श पूर्णकलशादिदर्शनं पान्थक्षेमकरमिति निमित्तज्ञाः ॥ ६७ ॥

**स ययौ धुतपक्षतिः क्षणं क्षणमूर्ध्वायनदुर्विभावनः ।**
**विततीकृतनिश्चलच्छदः क्षणमालोककदत्तकौतुकः ॥ ६८ ॥**

स इति ॥ स हंसः क्षणं धुतपक्षतिः कम्पितपक्षमूलः, क्षणमूर्ध्वायनेन ऊर्ध्वगमनेन दुर्विभावनः दुष्करावधारणो दुर्लक्ष्य इत्यर्थः । विततीकृतौ विसारितौ निश्चलौ छदौ पक्षौ यस्य सः । तथाऽऽलोककानां द्रष्टृणां दत्तकौतुकः सन् ययौ । स्वभावोक्तिः ॥ ६८ ॥

**तनुदीधितिधारया रयाद्गतया लोकविलोकनामसौ ।**
**हृदहेम कषन्निवालसत्कषपाषाणनिभे नभःस्थले ॥ ६९ ॥**

तन्विति ॥ असौ हंसो रयाद्धेतोरुत्पन्नयेति शेषः । लोकस्यालोकिजनस्य परीक्षकजनस्य विलोकनां दर्शनं गतया कौतुकाद्वर्णपरीक्षार्थञ्च विलोक्यमानयेत्यर्थः । तनोः शरीरस्य तन्वा सूक्ष्मया च दीधितिधारया रश्मिरेखया निमित्तेन । कषपाषाणनिभे निकषोपलनिभे नभःस्थले छद्हेम निजपक्षसुवर्णं कषन् घर्षन्निवालसत् अशोभतेत्युत्प्रेक्षा ॥ ६९ ॥

विनमद्भिरधःस्थितैः खगैर्झटिति श्येननिपातशङ्किभिः ।
स निरैक्षि दृशैकयोपरि स्यदझाङ्कारिपतत्रिपद्धतिः ॥ ७० ॥

विनमद्भिरिति ॥ स्यदेन वेगेन झाङ्कारिणी झामिति शब्दं कुर्वाणा पतत्रिपद्धतिः पक्षिसरणिः यस्य स हंसः । श्येननिपातं शङ्कत इति तच्छङ्किभिरत एव विनमद्भिर्विलीयमानैरधःस्थितैः खगैर्झटिति द्राक् एकया दृशा उपरि उपरिष्टात् निरैक्षि कर्मणि लुङ् । स्वभावोक्तिः ॥ ७० ॥

ददृशे न जनेन यन्नसौ भुवि तच्छायमवेक्ष्य तत्क्षणात् ।
दिवि दिक्षु वितीर्णचक्षुषा पृथुवेगद्रुतमुक्तदृक्पथः ॥ ७१ ॥

ददृश इति ॥ यन् गच्छन् । इणो लटः शत्रादेशः । असौ हंसः । भुवि तच्छायं तस्य छायाम् । ''विभाषा सेना'' इत्यादिना नपुंसकत्वम् । अवेक्ष्य तत्क्षणाद्दिवि दिक्षु च वीतीर्णचक्षुषा दत्तदृष्टिना जनेन पृथुवेगेन द्रुतं शीघ्रं मुक्तदृक्पथस्सन् न ददृशे न दृष्टः, क्षणमात्रं दृष्टिपथमतिक्रान्त इत्यर्थः ॥ ७१ ॥

न वनं पथि शिश्रियेऽमुना क्वचिदप्युच्चतरद्रुचारुतम् ।
न सगोत्रजमन्ववादि वा गतिवेगप्रसरद्रुचा रुतम् ॥ ७२ ॥

नेति ॥ गतिवेगेन प्रसरद्रुचा प्रसर्पत्तेजसा अमुना हंसेन क्वचिदपि उच्चतरात्युन्नता, द्रूणां द्रुमाणां चारुता रम्यता यस्मिन् तत् । 'पलाशीद्रुद्रुमागमाः' इत्यमरः । वनं न शिश्रिये । सगोत्रजं बन्धुजन्यं रुतं कूजितं वा नान्ववादि नानूदितं मध्येमार्गमध्वश्रमापनोदनबन्धुसम्भाषणादिकमपि न कृतमिति सुहृत्कार्यानुसन्धानपरत्वोक्तिः ॥ ७२ ॥

अथ भीमभुजेन पालिता नगरी मञ्जुरसौ धराजिता।
पतगस्य जगाम दृक्पथं हिमशैलोपमसौधराजिता ॥ ७३ ॥

अथेति ॥ धराजिता भूमिजयिना। "सत्सूद्विष" इत्यादिना क्विप् तुक्। भीमस्य भीमभूपस्य भुजेन पालिता हिमशैलोपमैः सौधैः राजसदनैः राजिता मञ्जुः मञ्जुला मनोज्ञा असौ पूर्वोक्तनगरी कुण्डिनपुरी पतगस्य हंसस्य दृक्पथं जगाम स तां ददर्शेत्यर्थः। अत्र यमकाख्यानुप्रासस्य हिमशैलोपमेति उपमायाश्च संसृष्टिः ॥ ७३ ॥

दयितं प्रति यत्र सन्तता रतिहासा इव रेजिरे भुवः।
स्फटिकोपलविग्रहा गृहाश्शशभृद्भित्तनिरङ्कभित्तयः ॥ ७४ ॥

अथ नगरीं वर्णयति—दयितमिति ॥ यत्र नगर्यां, स्फटिकोपलविग्रहाः स्फटिकमयशरीरा इत्यर्थः। अत एव शशभृद्भित्तनिरङ्कभित्तयः शशाङ्कशकलनिष्कलङ्कानि कुड्यानि येषां ते। 'भित्तं शकलखण्डे वा' इत्यमरः। भिदेः क्तिन्प्रत्ययः। "भित्तं शकलम्" इत्यादिनिपातनात् "रदाभ्याम्" इत्यादिना निष्ठानत्वाभावः। गृहाः दयितं भीमं प्रियं प्रति सन्तता भुवो भूमेर्नायिकाया रतिहासा इव केलिहास्यानीव रेजिरे इत्युत्प्रेक्षा ॥ ७४ ॥

नृपनीलमणीगृहत्विषामुपधेर्यत्र भयेन भास्वतः।
शरणागतमुवास वासरेऽप्यसदावृत्त्युदयत्तमं तमः ॥ ७५ ॥

नृपेति ॥ यत्र नगर्यां तमोऽन्धकारः, भास्वतो भास्करात् भयेन नृपस्य ये नीलमणीनां गृहाः तेषां त्विषस्तासामुपधेश्छलादित्यपह्नवभेदः। 'रत्नं मणिर्द्वयोः' इत्यमरः। कृदिकारादक्तिनो वा ङीष्वक्तव्यः। शरणाप्तं शरणं गृहं रक्षितारञ्चागतम्। 'शरणं गृहरक्षित्रोः' इत्यमरः। वासरे दिवसेऽप्यसदावृत्त्यपुनरावृत्ति किञ्चोदयत्तमं सदुवास ॥ ७५ ॥

सितदीप्रमणिप्रकल्पिते यदगारे हसदङ्करोदसि।
निखिलान्निशि पूर्णिमा तिथीनुपतस्थेऽतिथिरेकिका तिथिः ॥७६॥

सितेति ॥ सितैर्दीप्रैश्च मणिभिः प्रकल्पिते उज्ज्वलस्फटिकनिर्मिते हसदङ्करोदसि विलसदङ्करोदस्के द्यावापृथिवीव्यापिनीत्यर्थः । यदगारे यस्या नगर्याः गृहेष्वित्यर्थः । जातावेकवचनम् । निशि निखिलान् तिथीनेकाकिनी एकैवेत्यर्थः । "एकादाकिनिच्चासहाय" इति चकारात् कप्रत्ययः । "प्रत्ययस्थात् कात्पूर्वस्य" इतीकारः । पूर्णिमातिथिः राकातिथिः । 'तद्राद्यास्तिथयो द्वयोः' इत्यमरः । अतिथिरूपतस्थे अतिथीभूय सङ्गतेत्यर्थः । "उपाद्देवपूजा" इत्यादिना सङ्गतिकरणे आत्मनेपदम् । स्फटिकभवनकान्तिनित्यकौमुदीयोगात् सर्वा अपि रात्रयो राकारात्रय एवासन्नित्यभेदोक्तेरतिशयोक्तिभेदः ॥ ७६ ॥

सुदतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताशया ।
न निशाखिलयापि वापिका प्रससाद ग्रहिलेव मानिनी ॥ ७७ ॥

सुदतीति ॥ यत्र नगर्यां शोभना दन्ता यासां ताः सुदत्यः स्त्रियः अत्र विधानाभावाद्दत्रादेशश्चिन्त्य इति केचित् । "अग्रान्तशुद्धशुभ्रवृषभ-वराहेभ्यश्च" इति चकारात् सिद्धिरिति केचित् । सुदत्यादयः स्त्रीषु योगरूढा स्त्रियः संज्ञायाम् इति दत्रादेशात्साधव इत्यपरे । तथैतत्सर्व-मभिसन्धाय आहैव वामनः । 'सुदत्यादयः प्रतिविधेया' इति । ता एव जनाः लोकाः तेषां मज्जनादवगाहनादर्पितैः सङ्क्रमितैरपि घुसृणैः कुङ्कुमैः कषायिताशया सुरभिताभ्यन्तरा भोगचिह्नैः कलुषितहृदया च । वाप्येव वापिका दीर्घिका ग्रहिला ग्रह आग्रहः तद्वती दीर्घरोषा । पिच्छा-दित्वादिलच् । मानिनी । "स्त्रीणामीर्ष्याकृतः कोपो मानो व्यासङ्गिनि प्रिये" इत्युक्तलक्षणो मानः । तद्वती नायिकेव अखिलया निशा निशया सर्वरात्रिप्रसादनेनेत्यर्थः । न प्रससाद प्रसन्नाशया नाभूत् तादृक्क्षोभादिति भावः ॥ ७७ ॥

क्षणनीरवया यया निशि श्रितवप्रावलियोगपट्टया ।
मणिवेश्ममयं सुनिर्मलं किमपि ज्योतिरबाह्यमिज्यते ॥ ७८ ॥

क्षणेति ॥ निशि निशीथे क्षणं नीरवया एकत्र सुप्तजनत्वादपरत्र ध्यान-स्तिमितत्वान्निरवशङ्कया, श्रितः प्राप्तो वप्रावलिर्योगपट्ट इव, अन्यत्र वप्रावलिरिव योगपट्टो यया सा तथोक्ता, यया नगर्या मणिवेश्ममयं तद्रूपं निर्मलं अबाह्यमन्तर्वर्ति किमप्यवाङ्मनसगोचरं ज्योतिः प्रभा आत्मज्योतिश्च इज्यते सेव्यते स्म । अत्र नगरीविशेषणसाम्यादप्रस्तुतयोगिनीप्रतीतेः समासोक्तिः ॥ ७८ ॥

विललास जलाशयोदरे क्वचन द्यौरनुबिम्बितेव या ।
परिघाकपटस्फुटस्फुरत्प्रतिबिम्बानवलंबिताम्बुनि ॥ ७९ ॥

विललासेति ॥ या नगरी परिघायाः कपटेन व्याजेन स्फुटं परितो व्यक्तं यथा तथा स्फुरता प्रतिबिम्बेनानवलम्बितं, मध्ये अगृह्यमाणं च अम्बु यस्मिन् तस्मिन् । प्रतिबिम्बाक्रान्तमम्बु परितः स्फुरति, प्रतिबिम्ब-देशे तु न स्फुरति तेनैव प्रतिबिम्बादिति भावः । क्वचन कुत्रचिज्जलाशयोदरे ह्रदमध्ये कस्यचिद्ध्रदस्य मध्य इत्यर्थः । अनुबिम्बिता द्यौरमरावतीव विललासेत्युत्प्रेक्षा ॥ ७९ ॥

व्रजते दिवि यद्गृहावली चलचेलाञ्चलदण्डताडनाः ।
व्यतरन्नरुणाय विश्रमं सृजते हेलिहयालिकालनाम् ॥ ८० ॥

व्रजत इति ॥ यस्यां नगर्यां गृहावलीषु चलाश्चलन्तः चेलाञ्चलाः पताकाग्राणि त एव दण्डास्तैस्ताडनाः कशाघाता इत्यर्थः । ताः कर्त्र्यः दिवि व्रजते खे गच्छते । 'हेलिहयालेः सूर्याश्वपङ्क्तेः । 'हेलिरालिङ्गने रवौ' इति वैजयन्ती । कालनाञ्चोदनां सृजते कुर्वते । अरुणाय सूर्यसारथये विश्रमं स्वयं तत्कार्यकरणाद्विश्रान्तिम् । नोदात्तोपदेश' इत्यादिना घन्वृत्तिप्रतिषेधः । व्यतरन् ददुः । अत्र हेलिहयालेश्चेलाञ्चनदण्डताडनासम्बन्धेऽपि तत्सम्बन्धो-क्तेरतिशयोक्तिभेदः । तेन च गृहाणामर्कमण्डलपर्यन्तमौन्नत्यं व्यज्यत इत्य-लङ्कारेण वस्तुध्वनिः ॥ ८० ॥

क्षितिगर्भधराम्बरालयैस्तलमध्योपरिपूरिणां पृथक् ।
जगतां खलु याखिलाद्भुताजनि सारैर्निजचिन्हधारिभिः ॥ ८१ ॥

क्षितीति ॥ तलमध्योपरि अधोमध्योर्ध्वदेशान् पूरयन्तीति तत्पूरिणां जगतां पातालभूमिस्वर्गाणां पृथगसङ्कीर्णं यानि निजानि प्रतिनियतानि चिह्नानि निध्यन्नपानस्रक्चन्दनादिलिङ्गानि धारयन्तीति तद्धारिभिस्तथोक्तैः सारैरुत्कृष्टैः क्षितिगर्भे पाताले धरायां भूपृष्ठे अम्बरे आकाशे च ये आलया गृहास्तैः भूम्यन्तर्बहिःशिरोगृहैरित्यर्थः । या नगरी अखिला कृत्स्ना अद्भुता चित्रा अजनि जाता । "दीपजन" इत्यादिना जनेः कर्तरि लुङ् । च्लेश्चिणादेशः । अत्र क्षितिगर्भादीनां तलमध्योपरिजगतां चिह्नानाञ्च यथासङ्ख्यसम्बन्धाद्यथासङ्ख्यालङ्कारः । एतेन त्रैलोक्यवैभवं गम्यते ॥ ८१ ॥

दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलं वपुः ।
कथमृच्छतु यत्र नाम न क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥ ८२ ॥

दधदिति ॥ यत्र नगर्यामम्बुदैर्मेघैरम्बुदवद्वा नीलकण्ठः शिखरोपकण्ठः गलश्च यस्य तस्य भावस्तत्ताम् । 'कण्ठो गले सन्निधाने' इति विश्वः । दधद् अत्यच्छतया सुधया लेपनद्रव्येण च सुधावदमृतवच्चोज्ज्वलं वपुः वहत् । 'सुधालेपोऽमृतं सुधा' इत्यमरः । क्षितिभृन्मन्दिरं राजभवनं इन्दुमौलिताम् इन्दुमण्डलपर्यन्तशिखरत्वम् । कथं नाम न ऋच्छतु गच्छत्वेवेत्यर्थः । राजभवनस्य तादृगौन्नत्यं युक्तमिति भावः । अन्यत्र इन्दुमौलित्वमीश्वरत्वञ्च तच्च नीलकण्ठस्य युक्तमिति भावः । अत्र विशेषणविशेष्याणां श्लिष्टानामभिधायाः प्रकृतार्थमात्रनियन्त्रणादप्रकृतेश्वरप्रतीतेर्ध्वनिरेव ॥ ८२ ॥

बहुरूपकसालभञ्जिकामुखचन्द्रेषु कलङ्करङ्कवः ।
यदनेककसौधकन्धराहरिभिः कुक्षिगतीकृता इव ॥ ८३ ॥

बह्विति ॥ बहुरूपका भूयिष्ठसौन्दर्याः शैषिकः कप्रत्ययः । तेषु सालभञ्जिकानां कृत्रिमपुत्रिकाणां मुखचन्द्रेषु कलङ्करङ्कवः चन्द्रत्वात् सम्भाविताः कलङ्कमृगास्ते यस्यां नगर्यां, अनेककेषां बहूनां सौधानां कन्धरासु कण्ठप्रदेशेषु ये हरयः सिंहास्तैः कुक्षिगतीकृता इव ग्रस्ताः किमित्युत्प्रेक्षा मुखचन्द्राणां निष्कलङ्कत्वनिमित्ता । अन्यथा कथं चन्द्रे निष्कलङ्कतेति भावः ॥ ८३ ॥

बलिसद्मदिवं स तथ्यवागुपरि स्माह दिवोऽपि नारदः ।
अधराथ कृता ययेव सा विपरीताजनि भूमिभूषया ॥ ८४ ॥

बलीति ॥ स प्रसिद्धस्तथ्यवाक् सत्यवचनो नारदः बलिसद्मदिवं पातालस्वर्गं दिवो मेरुस्वर्गादप्युपर्युपरि स्थितामुत्कृष्टाञ्च स्माह उक्तवान् । अथेदानीं भूमिभूषया यया नगर्या । अधरा न्यूना अधस्ताच्च कृतेवेत्युत्प्रेक्षा । सा बलिसद्मद्यौः नारदोक्तिविपरीताजनि । सर्वोपरिस्थितायाः पुनरधस्थितिः वैपरीत्यम् ॥ ८४ ॥

प्रतिहट्टपथे घरट्टजात्पथिकाह्वानदसक्तुसौरभे ।
कलहान्न घनाद्यदुत्थितादधुनाप्युज्झति घर्घरस्वनः ॥ ८५ ॥

प्रतीति ॥ पन्थानं गच्छन्तीति पथिकाः तेषामाह्वानं ददातीति तथोक्तं आह्वायकं अध्वानं गच्छतामाकर्षकमित्यर्थः । तत्सक्तूनां सौरभं सुगन्धो यस्मिन् प्रतिहट्टपथे प्रत्यापणपथम् । "अव्ययं विभक्ति" इत्यादिना वीप्सायामव्ययीभावः । "तृतीयासप्तम्योर्बहुलम्" इति सप्तम्या न अम्भावः। घरट्टाः गोधूमचूर्णग्रावाणः तज्जात् यस्यां नगर्यां उत्थितात् कलहात् घर्घरस्वनो झिर्झरवद्ध्वनिः कण्ठध्वनिः घनान्मेघादधुनापि नोज्झति न त्यजति । सर्वदा सर्वहट्टेषु घट्टा मेघध्वानं ध्वनन्तीति भावः । अत्र घनानां घरट्टकलहासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तथा च तद्घर्घरस्वनस्य तद्धेतुकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या चेति सङ्करः ॥ ८५ ॥

वरणः कनकस्य मानिनीं दिवमङ्कादमराद्रिरागताम् ।
घनरत्नकवाटपक्षतिः परिरभ्यानुसरन्नुवास याम् ॥ ८६ ॥

वरण इति ॥ कनकस्य सम्बन्धी वरणः प्राकारः । 'प्राकारो वरणः सालः' इत्यमरः । तद्विकारः स एवामराद्रिः मेरुः, यां नगरीमेव मानिनीं कोपसम्पन्नामत एव अङ्कान्निजोत्सङ्गादागतां भूलोकं प्राप्तां दिवममरावतीं घने निबिडे रत्नानां कवाटे रत्नमयकवाटे एव पक्षती पक्षमूले यस्य स सन् परिरभ्योपगृह्य मेरोः पक्षवत्त्वात् पक्षतिरूपत्वमनुसरन् अनुवर्तमान उवास ।

कामिनः प्रणयकुपितां प्रेयसीं आप्रसादमनुगच्छन्तीति भावः । रूपकालंकारः स्फुटमेव । तेन चेयं नगरी कुतश्चित्कारणादागता द्यौरेव वरणः स्वर्णाद्रिरेवेत्युत्प्रेक्षा व्यज्यते ॥ ८६ ॥

अनलैः परिवेषमेत्य या ज्वलदर्कोपलवप्रजन्मभिः ।
उदयं लयमन्तरा रवेरवहद्बाणपुरीपरार्ध्यताम् ॥ ८७ ॥

अनलैरिति ॥ या नगरी रवेरुदयं लयमस्तमयञ्चान्तरा, तयोर्मध्यकाल इत्यर्थः । "अन्तरान्तरेण" युक्ते इति द्वितीया । ज्वलतां अर्कांशुसम्पर्कात् प्रज्ज्वलतामर्कोपलानां वप्रात् जन्म येषां तैः सूर्यकान्तैः प्राकारजन्यैरनलैः परिवेषमेत्य परिवेष्टनं प्राप्य बाणपुर्याः बाणासुरनगर्याः शोणितपुरस्य परार्ध्यतां श्रेष्ठतामवहत् । अत्रान्यधर्मस्यान्येन सम्बन्धासम्भवात् तादृशीं परार्ध्यतामिति सादृश्याक्षेपान्निदर्शनालंकारः ॥ ८७ ॥

बहुकम्बुमणिर्वराटिकागणनाटत्करकर्कटोत्करः ।
हिमबालुकयाच्छबालुकः पटु दध्वान यदापणार्णवः ॥ ८८ ॥

बह्विति ॥ बहवः कम्बवः शङ्खाः मणयश्च यस्मिन् सः, वराटिकागणनाय कपर्दिकासङ्ख्यानाय अटन्तस्तिर्यक् प्रचरन्तः कराः पाणय एव कर्कटोत्कराः कुलीरसङ्घाः यस्मिन् सः हिमबालुकया कर्पूरेणाच्छबालुकः स्वच्छसिकतः यस्याः पुरः आपणो विपणिरेव अर्णवः पटु धीरं दध्वान ननाद । 'कपर्दो वराटिका' इति हलायुधः । 'शङ्खः स्यात्कम्बुरस्त्रियाम्' इत्यमरः । 'सिताभ्रो हिमबालुका । स्यात् कुलीरः कर्कटकः' इति चामरः ॥ ८८ ॥

यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥ ८९ ॥

यदिति ॥ यस्याः नगर्या अगारघटासु गृहसमूहेषु अट्टानां अट्टालकानां कुट्टिमेषु बद्धभूमिषु । 'कुट्टिमोऽस्त्री बद्धभूमिः' इति यादवः । स्रवद्भिः इन्दुसम्पर्कस्यन्दमानैरिन्दूपलैश्चन्द्रकान्तैर्हेतुभिः, तुन्दिलाः प्रवृद्धा आपो

यस्यास्तया 'तुन्दादिभ्य इलच्' । "ऋक्पूः" इत्यादिना समासान्तः । अभ्रगङ्गया मन्दाकिन्या । 'मन्दाकिनी वियद्गङ्गा' इत्यमरः । चन्द्रोदये चन्द्रोदये प्रतिचन्द्रोदयम् । वीप्सायामव्ययीभावः । पतिव्रतानामौचिती औचित्यम् । ब्राह्मणादित्वात् गुणवचनेत्यादिना ष्यञ्प्रत्ययः । "षिद्गौरादिभ्यश्च" इति ङीष् । स च "मातरिषच्च" इति षित्वादेव सिद्धे मातामहशब्दस्य गौरादिपाठेनानित्यत्वज्ञापनात् वैकल्पिकः । अत एव वामनः— "ष्यञः षित्कार्यं बहुलम्" इति स्त्रीनपुंसकयोर्भावक्रिययोष्ष्यञ् क्वचिच्च वुञ् । 'औचित्यमौचिती मैत्र्यं मैत्री वुङ् प्रागुदाहृतम्' इत्यमरश्च । न मुमुचे न तत्यजे । भर्तुः समुद्रस्य चन्द्रोदये वृद्धिदर्शनात्तस्यापि तथा वृद्धिरुचिता । "आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्युः सा स्त्री ज्ञेया पतिव्रता ॥" इति स्मरणादिति भावः । अत्र अभ्रगङ्गाया यदगारेत्यादिविशेषणार्थासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । तथा च यदगाराणां अतीन्दुमण्डलमौन्नत्यं व्यज्यते । तदुत्थापिता चेयं अस्याः पातिव्रत्यधर्मापरित्यागोत्प्रेक्षेति सङ्करः । व्यञ्जकाप्रयोगाद्गम्यः ॥ ८९ ॥

**रुचयोस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु ।**
**अनुसायमभुर्विलेपनापणकश्मीरजपण्यवीथयः ॥ ९० ॥**

रुचय इति ॥ यत्र नगर्यां अनुसायम् । वीप्सायामव्ययीभावः । विलेपनापणेषु सुगन्धद्रव्यनिषद्यासु काश्मीरजानि कुङ्कुमान्येव पण्यानि द्रव्याणि तेषां वीथयः श्रेण्यः अस्तमितस्य अस्तङ्गतस्य भास्वतः सम्बन्धिन्यः स्खलिता अस्तमयक्षोभात् च्युताः अत एव निरालया निराश्रया रुचयः प्रभा अभुः खलु । कथञ्चित् प्रच्युताः सायन्तनार्कत्विष इव भान्ति स्मेत्यर्थः । कुङ्कुमराशीनां तदा तत्सावर्ण्यादियमुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । भातेर्लुङ् । झेर्जुसादेशः ॥ ९० ॥

**विततं वणिजापणेऽखिलं पणितुं यत्र जनेन वीक्ष्यते ।**
**मुनिनेव मृकण्डुसूनुना जगतीवस्तु पुरोदरे हरेः ॥ ९१ ॥**

विततमिति ॥ यत्र नगर्यां, वणिजा वणिग्जनेन पणितुं व्यवहर्तुं आपणे पण्यवीथ्यां, विततं प्रसारितं, अखिलं जगत्यां लोके स्थितं वस्तु पदार्थजातं, पुरा पूर्वं, हरेः विष्णोरुदरे मृकण्डुसूनुना मुनिना मार्कण्डेयेनेव जनेन लोकेन वीक्ष्यते विष्णूदरमिव समस्तवस्त्वाकरोऽयमाभासत इत्यर्थः । पुरा किल मार्कण्डेयो हरेरुदरं प्रविश्य विश्वं तत्राद्राक्षीदिति कथयन्ति॥ ९१॥

सममेणमदैर्यदापणे तुलयन् सौरभलोभनिश्चलम् ।
पणिता न जनारवैरवैदपि कूजन्तमलिं मलीमसम् ॥ ९२ ॥

सममिति ॥ यस्या नगर्या, आपणे सौरभलोभनिश्चलं गन्धग्रहणनिष्पन्दं, ततः क्रियया दुर्बोधमित्यर्थः । मलीमसं मलिनं सर्वाङ्गनीलमित्यर्थः । अन्यथा पीतमध्यस्थालेः पीतिम्नैव व्यवच्छेदादतोगुणतोऽपि दुर्ग्रहमित्यर्थः । "ज्योत्स्ना तमिस्रा" इत्यादिना निपातः । अलिं भृङ्गमेणमदैः समं कस्तूरीभिः सह तुलयन् पणिता क्रेता, कूजन्तमपि जनारवैः कलकलैः नावैत्ततोऽपि नाजानादित्यर्थः । इह निश्चलस्यालेः गुञ्जनं कविना प्रौढवादेनोक्तमित्यनुसन्धेयम् । अत्रालेः नैल्यादेणमदोक्तेः सामान्यालङ्कारः । "सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता" इति लक्षणात् । तेन भ्रान्तिमदलङ्कारो व्यज्यते ॥ ९२ ॥

रविकान्तमयेन सेतुना सकलाहज्वलनाहितोष्मणा ।
शिशिरे निशि गच्छतां पुरा चरणौ यत्र धुनोति नो हिमम् ॥

रवीति ॥ यत्र नगर्यां, सकलं कृत्स्नमहः । "राजाहस्सखिभ्यष्टच्" । "रात्राह्नाहाः पुंसि" इति पुँल्लिङ्गता अत्यन्तसंयोगे द्वितीया । योगविभागात्समासः । ज्वलनेन तपनकराभिघातात् प्रज्वलनेनाहितोष्मणा जनितौष्ण्येन रविकान्तमयेन सेतुना सेतुसदृशेन सूर्य्यकान्तकुट्टिमाध्वनेत्यर्थः । गच्छतां सञ्चरमाणानां चरणौ चरणानीत्यर्थः । स्तनादीनां द्वित्वविशिष्टा जातिः । प्रायेणेति जातौ द्विवचनम् । शिशिरं शिशिरर्तौ । तत्रापि निशि हिमं पुरा नो धुनोति नापीडयत् । यावत्पुरा निपातयोर्लट् । अत्र

सेतोरूष्मासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तत्रोत्तरस्याः पूर्वसापेक्षत्वात्सङ्करः ॥ ९३ ॥

**विधुदीधितिजेन यत्पथं पयसा नैषधशीलशीतलम् ।**
**शशिकान्तमयं तपागमे कलितीव्रस्तपति स्म नातपः ॥ ९४ ॥**

विध्विति ॥ विधुदीधितिजेन इन्दुसम्पर्कजन्येन, पयसा सलिलेन नैषधस्य नलस्य शीलं वृत्तं स्वभावो वा तद्वच्छीतं शशिकान्तमयं यत्पथं यस्याः नगर्याः पन्थानं, तपागमे ग्रीष्मप्रदेशे, कलितीव्रः कलिकालवत् प्रचण्ड आतपो न तपति स्म । नलकथायाः कलिनाशकत्वादिति भावः । अत्र नगरपथस्येन्दूपलपयस्सम्बन्धोक्तेरतिशयोक्तिः । तत्सापेक्षत्वादुपमयोस्सङ्करः ९४॥

**परिघावलयच्छलेन या न परेषां ग्रहणस्य गोचरा ।**
**फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता ॥ ९५ ॥**

परिघेति । परिघावलयच्छलेन परिघावेष्टनव्याजेन कुण्डलनां मण्डलाकाररेखामवापिता परेषां शत्रूणां ग्रहणस्याक्रमणस्य, अन्यत्रान्येषां ग्रहणस्य ज्ञानस्य न गोचरा अविषया या नगरी विषमा दुर्बोधा फणिभाषितभाष्यफक्किका पतञ्जलिप्रणीतमहाभाष्यस्थकुण्डलिग्रन्थः, नूनमिति शेषः । अत्र नगर्याः कुण्डलिग्रन्थत्वेनोत्प्रेक्षा । सा च परिघावलयच्छलेनेत्यपह्नवोत्थापितत्वात्सापह्नवा व्यञ्जकाप्रयोगाद्गम्या ॥ ९५ ॥

**मुखपाणिपदाक्ष्णि पङ्कजै रचिताङ्गेष्वपरेषु चम्पकैः ।**
**स्वयमादित यत्र भीमजा स्मरपूजाकुसुमस्रजः श्रियम् ॥ ९६ ॥**

मुखेति ॥ यत्र नगर्यां, मुखञ्च, पाणी च, पदे च, अक्षिणी च तस्मिन् । प्राण्यङ्गत्वादेकवद्भावः । पङ्कजैः रचिता सृष्टा अपरेषु मुखादिव्यतिरिक्तेषु अङ्गेषु चम्पकैश्चम्पकपुष्पैः, रचिता सर्वत्र सादृश्याद्व्यपदेशः, भीमजा भैमी, स्वयं स्मरपूजाकुसुमस्रजः श्रियं शोभामादित प्राप्तवती । ददातेर्लुङ् । "स्थाघ्वोरिच्च" इतीत्वम्, "ह्रस्वादङ्गात्" इति सलोपः । अत्रान्यश्रियोऽन्यत्रासम्भवात् श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शनाभेदः । तथा तदङ्गानां पङ्कजाद्यभेदोक्तेरतिशयोक्तिः । तदुत्थापिता निदर्शनेति सङ्करः॥९६॥

जघनस्तनभारगौरवाद्वियदालम्ब्य विहर्तुमक्षमाः ।
ध्रुवमप्सरसोऽवतीर्य यां शतमध्यासत तत्सखीजनः ॥ ९७ ॥

जघनेति ॥ जघनानि स्तनाश्च जघनस्तनम् । प्राण्यङ्गत्वादेकवद्भावः । तदेव भारः तस्य गौरवाद् गुरुत्वाद् वियदालम्ब्य विहर्तुमक्षमाः शतं शतसङ्ख्यकाः 'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इत्यमरः । अप्सरसोऽवतीर्य स्वर्गादागत्य तत्सखीजनः सत्यः जातावेकवचनम् । यां नगरीं, अध्यासत । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् । ध्रुवमित्युत्प्रेक्षा । अप्सरसः अप्सरः कल्पाः शतं सख्य एनामुपासत इत्यर्थः ॥ ९७ ॥

स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्तु या ।
स्वरभेदमुपैतु या कथं कलितानल्पमुखारवा न वा ॥ ९८ ॥

स्थितीति ॥ चित्रमयी आश्चर्यप्रचुरा, आलेख्यमयी च । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । या स्थित्या मर्यादया स्थायित्वेन च शालन्ते ये ते समस्ता वर्णाः ब्राह्मणादयः शुक्लादयश्च यस्यास्तस्याः भावः तत्ताम् । 'वर्णौ द्विजादौ शुक्लादौ' इत्यमरः । कथं न बिभर्तु बिभर्त्वेवेत्यर्थः । कलितः प्राप्तः अनल्पानां बहूनां मुखानां आरवो बहुमुखानां षण्मुखादीनाञ्च आरवः शब्दो यस्याः या पुरी, स्वरस्य ध्वनेर्भेदं नानात्वम् । स्वः स्वर्गाद्भेदञ्च कथं नोपैतु उपैत्वेवेत्यर्थः । उभयत्रापि सति कारणे कार्यं भवेदिति भावः । अत्र केवलप्रकृतश्लेषालङ्कारः । उभयोरप्यर्थयोः प्रकृतत्वात्, किं त्वेकनाले फलद्वयवदेकस्मिन्नेव शब्देऽर्थद्वयप्रतीतेरर्थश्लेषः प्रथमार्धे, द्वितीये तु, जतुकाष्ठवदेकवद्भूताच्छब्दद्वयादर्थद्वयप्रतीतेः शब्दश्लेषः ॥ ९८ ॥

स्वरुचारुणया पताकया दिनमर्केण समीयुषोत्तृषः ।
लिलिहुर्बहुधा सुधाकरं निशि माणिक्यमया यदालयाः ॥ ९९ ॥

स्वरुचेति ॥ माणिक्यमयाः पद्मरागमयाः, यदालयाः यस्यां नगर्यां गृहाः दिनं दिने । अत्यन्तसंयोगे द्वितीया । समीयुषा सङ्गतेन अर्केण हेतुना । उत्तृषः अर्कसम्पर्कादुत्पन्नपिपासाः सन्तः । स्वरुचा स्वप्रभया, अरुणया आरुण्यं प्राप्तयेति । तद्गुणालङ्कारः । "तद्गुणः स्वगुणत्यागा-

दन्योत्कृष्टगुणाहृतिः'' इति लक्षणात् । पताकया रसनायमानयेति भावः । सुधाकरं, बहुधा लिलिहुः आस्वादयामासुरित्यर्थः । अह्नि सन्तप्ता निशि शीतोपचारं कुर्वन्तीति भावः । अत्र गृहाणां सन्तापनिमित्तः सुधाकर-लेहनात्मा शीतोपचारः उत्प्रेक्ष्यते सा चोक्ततद्गुणोत्थेति सङ्करः । व्यञ्जकाप्रयोगाद्गम्या ॥ ९९ ॥

लिलिहे स्वरुचा पताकया निशि जिह्वानिभया निशाकरम् ।
श्रितमर्ककरैः पिपासु यन्नृपसद्मामलपद्मरागजम् ॥ १०० ॥

अथानयैव भङ्ग्या राजभवनं वर्णयति—लिलिह इति ॥ अमलपद्म-रागजं, यस्यां नगर्यां, नृपसद्म राजभवनं, अर्ककरैः श्रितं अतिसामीप्याद-भिव्याप्तम् । श्रयतेः कर्मणि क्तः । 'श्रिणातेः पक्वार्थात्' इति केचित् । तदा ह्रस्वं चिन्त्यम्, प्रकृत्यन्तरं मृग्यमित्यास्तां तत् । अत एव पिपासु तृषितं सत् । पिबतेः सन्नन्तादुप्रत्ययः । स्वकीया रुग्यस्यां तया स्वरुचा तद्भूषितयेत्यर्थः । अत एव जिह्वानिभया पताकया सुधाकरं लिलिहे आस्वादयामास । लिहेः कर्तरि लिट् । स्वरितत्वादात्मनेपदं, अलङ्कारश्च पूर्ववत् । जिह्वानिभयेत्युपमासङ्करश्च विशेषः ॥ १०० ॥

अमृतद्युतिलक्ष्म पीतया मिलितं यद्वलभीपताकया ।
वलयायितशेषशायिनस्सखितामादित पीतवाससः ॥ १०१ ॥

अमृतेति ॥ पीतया पीतवर्णया, यस्या नगर्याः, वलभ्याम् । 'कूटागा-रस्तु वलभिः' इत्यमरः । पताकया मिलितं सामीप्यात् सङ्गतं अमृतद्युति-लक्ष्म चन्द्रलाञ्छनं वलयायिते वलयीभूते शेषे शेत इति तच्छायिनः पीत-वाससः पीताम्बरस्य विष्णोः, सखितां सदृशतामादित अग्रहीदित्युपमा-लङ्कारः ॥ १०१ ॥

अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।
पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥ १०२ ॥

अश्रान्तेति ॥ यस्या नगर्याः, प्रासादे दुकूलं वल्लिरिव दुकूलवल्लिः दुकूलमयी पताकेत्यर्थः । अश्रान्तेन श्रुतिपाठेन, नित्यवेदपाठेन, पूताभ्यः पवित्राभ्यः, रसनाभ्यो जिह्वाभ्यः, आविर्भूतेषु भूरिस्तवेषु अनेकस्तोत्रेषु अजिह्मेन अकुण्ठेन ब्रह्मणो मुखानामोघेन हेतुना । विघ्निता सञ्जातविघ्ना नवस्वर्गक्रिया नूतनस्वर्गसृष्टिरेव केलिलीला यस्य तेन गाधिसुतेन विश्वामित्रेण, पूर्वं ब्रह्मप्रार्थनात पूर्वं सामिघटिता अर्धसृष्टा । 'सामि त्वर्धे जुगुप्सने' इत्यमरः । मुक्ता पश्चात्त्यक्ता मन्दाकिनी नु आकाशगङ्गा किम्, अनिलस्य कर्तुरान्दोलनैश्चलैर्दिवि आकाशे अखेलत् विजहारेत्युत्प्रेक्षा । एषा कथा विशङ्कूपाख्याने द्रष्टव्या । शार्दूलविक्रीडितवृत्तम् । "सूर्याश्वैर्मसजास्ततास्सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥ १०२ ॥

यदतिविमलनीलवेश्मरश्मिभ्रमरितभाश्शुचिसौधवस्त्रवल्लिः ।
अलभत शमनस्वसुश्शिशुत्वं दिवसकराङ्कतले चला लुठन्ती ॥

यदिति ॥ यस्या नगर्याः, अतिविमलैर्नीलवेश्मनः इन्द्रनीलनिकेतनस्य रश्मिभिर्भ्रमरिता भ्रमरीकृता भ्रमरशब्दात्तत्करोतीति ण्यन्तात्कर्मणि क्तः । वल्या च भ्रमरैर्भाव्यमिति भावः । तथाभूता भाश्छाया यस्यास्सा श्यामीकृतप्रभेत्यर्थः । अत एव तद्गुणालङ्कारः । शुचिः स्वभावतः शुभ्रा सौधस्य वस्त्रमेव वल्लिः वस्त्रवल्लिः, पताकेत्यर्थः । रूपकसमासः । भ्रमरितभा इति रूपकादेव साधकात् दिवसकरस्य सूर्यस्य अङ्कतले समीपदेशे उत्सङ्गदेशे च चला चपला लुठन्ती परिवर्तमाना सती शमनस्वसुर्यमुनायाः शिशुत्वं शैशवमलभत् । बालयमुनेव बभावित्यर्थः । बालिकाश्च पितुरङ्के लुठन्तीति भावः । अत्रान्यशैशवेनान्यसम्बन्धासम्भवेऽपि तत्सदृशमिति सादृश्याक्षेपान्निदर्शना । पूर्वोक्ततद्गुणरूपकाभ्यां सङ्कीर्णा ॥ १०३ ॥

स्वप्राणेश्वरनर्महर्म्यकटकातिथ्यग्रहायोत्सुकं
पाथोदं निजकेलिसौधशिखरादारुह्य यत्कामिनी ।
साक्षादप्सरसो विमानकलितव्योमान एवाभव-
न्नत्र प्राप निमेषमप्यतरसा यान्ती रसादध्वनि ॥१०४॥

स्वेति ॥ यत्कामिनी यन्नगराङ्गना, विमानेन कलितं क्रान्तं व्योम याभिस्तास्साक्षादप्सरसो दिव्याङ्गनैवाभवत्। "स्त्रियां बहुष्वप्सरसः" इत्यभिधानादेकत्वेऽपि बहुवचनप्रयोगः। कुतः। यद्यस्मान्निजकेलिसौधशिखराद् पादानात् स्वप्राणेश्वरस्य नर्महर्म्यं क्रीडासौधं तस्य कष्टकान्वितम्बादातिथ्यस्य ग्रहाय स्वीकाराय, तत्र विश्रमार्थमित्यर्थः। उत्सुकमुत्सुक्तं गच्छन्तमित्यर्थः। पाथोदं मेघमारुह्य रसाद्रागाद्यान्ती गच्छन्ती। अध्वनि अन्तरसा मेघवेगेन हेतुना, निमेषं न प्राप। अत्र नगरामराङ्गनयोर्भेदेऽपि अनिमेषमेघारोहणव्योमयानैः सैवेत्यभेदोक्तेरतिशयोक्तिभेदः। शार्दूलविक्रीडितवृत्तम् ॥१०४॥

वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥

वैदर्भीति ॥ उत्ताना वै देवगवा वहन्तीति श्रुत्यर्थमाश्रित्य आह—वैदर्भीकेलिशैले मरकतशिखरादुत्थितैः अथ ब्रह्माण्डाघातेन भग्नः स्यदजमदो वेगगर्वौ येषां तत्तया ह्रिया धृतं अवाङ्मुखत्वं यैस्तैरधोमुखैः। अत एव दिव्युत्तानगाया ऊर्ध्वमुखाया इत्यर्थः। कस्याः सुरसुरभेर्देवगव्या आस्यदेशं गताग्रैरंशुभिरेव दर्भैर्यस्या नगर्याः सम्बन्धिगोग्रासप्रदानव्रतसुकृतमविश्रान्तं नोज्जृम्भते स्म। किंतु सर्वस्या अपि ग्रासदानाद्यत्तत् सुकृतमेवोज्जृम्भितमित्यर्थः। अत्युक्त्यलङ्कारोऽयमिति केचित्। अंशुदर्भाणां ब्रह्माण्डाघाताद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः। स्रग्धरावृत्तम्। "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात्॥ १०५ ॥

विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः
शशिदृषदुपकॢप्तैरालवालैस्तरूणाम्।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥ १०६ ॥

विधिवति॥ तत्र तस्यां नगर्यां, शशिदृषदुपकॢप्तैश्चन्द्रकान्तशिलाबद्धै-

रत एव विधुकरपरिरम्भाच्चन्द्रकिरणसम्पर्काद्धेतोरात्तनिष्यन्दैः जलप्रस्रवणैरेव
पूर्णैस्तरूणामालवालैर्विफलितं व्यर्थीकृतं जलसेकस्य प्रक्रियायां प्रकारे गौरवं
भारो यस्य तेन भैमीवनेन स हंसो हृतचित्तो व्यरचि । कर्मणि लुङ् । अत्रा-
लवालानां चन्द्रकान्तनिष्यन्दासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः । ए-
तदारभ्य चतुः श्लोकपर्यन्तं मालिनीवृत्तम् । "ननमययुतेयं मालिनी भोगि-
लोकैः" इति लक्षणात् ॥ १०६ ॥

अथ कनकपतत्रस्तत्र तां राजपुत्रीं
सदसि सदृशभासां विस्फुरन्तीं सखीनाम् ।
उडुपरिषदि मध्यस्थायिशीतांशुलेखा-
नुकरणपटुलक्ष्मीमक्षिलक्षीचकार ॥ १०७ ॥

अथेति ॥ अथ दर्शनानन्तरं कनकपतत्रः स्वर्णपक्षी, तत्र वने सदृश-
भासां आत्मतुल्यलावण्यानां सखीनां सदसि विस्फुरन्तीम् । "स्फुरतिस्फु-
लत्योः परिनिविभ्यश्च" इति षत्वम् । उडुपरिषदि तारकासमाजे मध्यस्था-
यिन्याः शीतांशुलेखायाश्चन्द्रकलायाः अनुकरणे पटुः, समर्था लक्ष्मीः शोभा
यस्याः सा इत्युपमालङ्कारः । तां राजपुत्रीं अक्षिलक्षीचकार अद्राक्षी-
दित्यर्थः ॥ १०७ ॥

भ्रमणरयविकीर्णस्वर्णभासा खगेन
क्वचन पतनयोग्यं देशमन्विष्यताधः ।
मुखविधुमदसीयं सेवितुं लम्बमान-
श्शशिपरिधिरिवोच्चैर्मण्डलस्तेन तेने ॥ १०८ ॥

भ्रमणेति ॥ अधो भूतले क्वचन कुत्रचित् पतनयोग्यं देशं स्था
अन्विष्यता गवेषमाणेन । अत एव भ्रमणरयेन विकीर्णा स्वर्णस्य भा
दीप्तिर्यस्य तेन खगेन, अमुष्या अयमदसीयम् । "वृद्धाच्छः, त्यदादीनि
च" इति वृद्धसंज्ञा । मुखविधुं मुखेन्दुं सेवितुं लम्बमानः स्रंसमानः शशि-
परिधिः चन्द्रपरिवेष इव, उच्चैरुपरि मण्डलो वलयस्तेने वितेने । तनोतेः
कर्मणि लिट् । उत्प्रेक्षास्वभावोक्त्योः सङ्करः ॥ १०८ ॥

अनुभवति शचीत्थं सा घृताचीमुखाभि-
र्न सह सहचरीभिर्नन्दनानन्दमुच्चैः ।
इति मतिरुदयासीत्पक्षिणः प्रेक्ष्य भैमीं
विपिनभुवि सखीभिस्सार्धमाबद्धखेलाम् ॥१०९॥

अनुभवतीति ॥ विपिनभुवि वनप्रदेशे, सखीभिः सहचरीभिः, " सख्यशिश्वीति भाषायाम् " इतिनिपातनात् ङीप् । सार्द्धं आबद्धखेलां अनुबद्धक्रीडाम् । 'क्रीडा खेला च कूर्दनम्' इत्यमरः । भैमीं प्रेक्ष्य पक्षिणः, सा प्रसिद्धा शची इन्द्राणी, घृताचीमुखाभिः सहचरीभिः सह इत्थमुच्चैरुत्कृष्टं नन्दनानन्दं नन्दनसुखं नानुभवतीति मतिः बुद्धिरुदयासीदुत्थिता अत्र प्रेक्ष्य मतिरिति मननक्रियापेक्षया समानकर्तृकत्वात् पूर्वकालत्वाच्च प्रेक्ष्येति क्त्वानिर्देशोपपत्तिः । तावन्मात्रस्यैव तत्प्रत्ययोत्पत्तौ प्रयोजकत्वात् । प्राधान्यं त्वप्रयोजकमिति न कश्चिद्विरोधः । अत्रोपमानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः । " भेदप्रधानसाधर्म्यमुपमानोपमेययोः । आधिक्याद्ल्पकथनाद् व्यतिरेकस्स उच्यत " इति लक्षणात् ॥ १०९ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरस्सुतं
श्रीहीरस्सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
द्वैतीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्येचारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥

श्रीहर्षमित्यादि व्याख्यातम् । द्वितीय एव द्वैतीयीकः । द्वितीयादीकक् स्वार्थे वा वक्तव्य इतीकक् । द्वैतीयीकतया मितो द्वितीयत्वेन गणितः द्वितीय इत्यर्थः । अगमत् ॥ ११० ॥

इतिपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचिते नैषधव्याख्याने जीवातुसमाख्याने
द्वितीयः सर्गः समाप्तः ।

# तृतीयः सर्गः ।

आकुञ्चिताभ्यामथ पक्षतिभ्यां नभोविभागात्तरसाऽवतीर्य ।
निवेशदेशाततधूतपक्षः पपात भूमावुपभैमि हंसः ॥ १ ॥

आकुञ्चिताभ्यामिति ॥ अथ मण्डलीकरणानन्तरं, हंसः, आकुञ्चिताभ्यामावर्जिताभ्यां, पक्षतिभ्यां पक्षमूलाभ्यां, नभोविभागादाकाशदेशात्, तरसा वेगेन, अवतीर्य । निवेशदेशे उपवेशनस्थाने, आततौ प्रसारितौ धूतौ कम्पितौ च पक्षौ येन सः तथाभूतस्सन्, उपभैमि भैम्याः समीपे । सामीप्येऽव्ययीभावः । नपुंसकत्वं ह्रस्वत्वञ्च । भूमौ पपात । स्वभावोक्तिरलङ्कारः ।१।

आकस्मिकः पक्षपुटाहतायाः क्षितेस्तदा यस्स्वन उच्चचार ।
द्रागन्यविन्यस्तदृशस्स तस्याः संभ्रान्तमन्तःकरणञ्चकार ॥ २ ॥

आकस्मिक इति ॥ तदा पतनसमये, पक्षपुटाहतायाः क्षितेर्भूतलात् अकस्मादेव आकस्मिकः निर्हेतुकः अपरिदृष्टहेतुक इत्यर्थः । यः स्वनो ध्वनिः, द्राग्झटिति उच्चचार उत्थितः । सः स्वनः, अन्यविन्यस्तदृशः विषयान्तराविष्टदृष्टेस्तस्या भैम्याः, अन्तःकरणं सम्भ्रान्तं ससम्भ्रमञ्चकार । अकाण्डे असम्भावितशब्दश्रवणाच्चमत्कृतचित्ताभूदित्यर्थः । अत्रापि स्वभावोक्तिः ॥२॥

नेत्राणि वैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि ।
प्रापुस्तमेकं निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ॥ ३ ॥

नेत्राणीति ॥ विदर्भाणां राज्ञो वैदर्भस्य भीमस्य सुतायाः भैम्याः सखीनां नेत्राणि विमुक्तास्तत्तद्विषयग्रहास्तत्तदर्थग्रहणानि । अन्यत्र तत्तद्विषयासङ्गो यैस्तानि सन्ति । एकमेकचरमद्वितीयं नोपाख्यायत इति निरुपाख्यमवाच्यं रूपमाकारः स्वस्वरूपञ्च यस्य, तं पुरोवर्तिनं हंसं तत् पदार्थभूतञ्च । यतव्रतानां योगिनां चेतांसि ब्रह्म परमात्मानमिव प्रापुः अत्यादरेणाद्राक्षुरित्यर्थः ॥

हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम् ।
गृहीतुकामादरिणा शयेन यत्नादसौ निश्चलतां जगाहे ॥ ४ ॥

हंसमिति ॥ असौ दमयन्ती, मुनेर्योगिनो मनोवृत्तिरिव स्विकायां स्वकीयायाम् । "प्रत्ययस्थात्कात्पूर्वस्य" इतीकारः । तनौ शरीरान्तिके' अन्यत्र तदभ्यन्तरे, सन्निहितमासन्नमाविर्भूतञ्च । चरन्तं सञ्चरन्तं वर्तमानञ्च हंसं मरालं परमात्मानञ्च । 'हंसो विहगभेदे स्यात् परमात्मनि मत्सरः' इति विश्वः । अदरिणा निर्भीकेन शयेन पाणिना । 'दरोऽस्त्रियां भये श्वभ्रे, पञ्चशाखः शयः पाणिः' इति चामरः । अन्यत्र आदरिणा आदरवता, आशयेन चित्तेन गृहीतुकामा साक्षात्कर्तुकामा च । यत्नान्निश्चलतां निश्चलाङ्गत्वं निश्चलचित्तत्वञ्च, जगाहे जगाम ॥ ४ ॥

तामिङ्गितैरप्यनुमाय मायामयं न धैर्याद्वियदुत्पपात ।
तत्पाणिमात्मोपरिपातुकं तु मोघं वितेने प्लुतिलाघवेन ॥ ५ ॥

तामिति ॥ अयं हंसः, तां पूर्वोक्तां मायां कपटं, इङ्गितैश्चेष्टाभिः अनुमाय निश्चित्यापि, धैर्यात् धैर्यं स्थैर्यमास्थाय ल्यब्लोपे पञ्चमी । वियदाकाशं प्रति । नोत्पपात नोड्डिड्ये । आत्मन उपरि पातुकम्पतयालुम् । "लषपत" इत्यादिना उकञ्प्रत्यः । तस्याः पाणिं तु प्लुतिलाघवेन उत्पतनकौशलेन मोघं वितेने व्यधत्त । विफलयत्नम् अकरोत्, आशाञ्च जनयति न तु पाणौ लगतीत्यर्थः ॥ ५ ॥

व्यर्थीकृतं पत्त्ररथेन तेन तथाऽवसाय व्यवसायमस्याः ।
परस्परामर्पितहस्ततालं तत्कालमालीभिरहस्यतालम् ॥ ६ ॥

व्यर्थीकृतमिति ॥ अस्या भैम्याः, व्यवसायं हंसग्रहणोद्योगं, तेन पत्त्ररथेन पक्षिणा व्यर्थीकृतं यथा तथा । अवसाय सम्यग् ज्ञात्वा, तत्कालं तस्मिन् काले । अत्यन्तसंयोगे द्वितीया । स एव कालो यस्य इति बहुव्रीहिणा क्रियाविशेषणं वा । परस्परां परस्परस्यामित्यर्थः । कर्मव्यतीहारे सर्वनाम्नो द्विर्भावः । "समासवच्च बहुलम्" इति बहुलग्रहणादसमासवद्भावे पूर्वपदस्य प्रथमैकवचने कस्कादित्वाद्विसर्जनीयस्य सत्वम् । उत्तरपदस्य

यथायोगं द्वितीयैकवचनम् । "स्त्रीनपुंसकयोरुत्तरपदस्याम्भावो वक्तव्यः" इति विकल्पादामादेशः । अर्पितहस्ततालं दत्तहस्तताडनं यथा तथा । आलीभिः, सखीभिः, अलमहस्यत हसितम् । भावे लङ् ॥ ६ ॥

**उच्चाटनीयः करतालिकानां दानादिदानीं भवतीभिरेषः ।**
**यान्वेति मां द्रुह्यति मह्यमेव सात्रेत्युपालम्भि तयालिवर्गः ॥७॥**

उच्चाटनीय इति ॥ हे सख्यः, इदानीं भवतीभिरेष हंसः, करतालिकानां दानादन्योन्यहस्तताडनकरणादुच्चाटनीयः किमिति काकुः । नोच्चाटनीय एवेत्यर्थः । अत्र सखीसमूहे या मामन्वेति । सा मह्यमेव द्रुह्यति मां जिघांसतीत्यर्थः । 'क्रुधद्रुह' इत्यादिना सम्प्रदानत्वाच्चतुर्थी । इतीत्थं तया भैम्या, आलिवर्गः सखीसङ्घः, उपालम्भि अशापि शापेनैव निवारित इत्यर्थः ॥ ७ ॥

**धृताल्पकोपा हसिते सखीनां छायेव भास्वन्तमभिप्रयातुः ।**
**श्यामाथ हंसस्य करानवाप्तेर्मन्दाक्षलक्ष्या लगति स्म पश्चात् ॥८॥**

धृतेति ॥ अथ सखीनिवारणानन्तरं सखीनां हसिते हास्यनिमित्ते सति, धृताल्पकोपा । तास्वीषत्कुपितेत्यर्थः । भास्वन्तमभिप्रयातुः सूर्याभिमुखं गच्छतः छाया अनातपरेखेव । श्यामा यौवनमध्यस्था । 'श्यामा यौवनमध्यस्था' इत्युत्पलमालायाम् । अन्यत्र श्यामला । हंसस्य कर्मणि षष्ठी । करेण हस्तेन अनवाप्तेरग्रहणाद्धेतोर्यन्मन्दाक्षं ह्रीस्तेन लक्ष्या उपलक्ष्या ह्रीणा सतीत्यर्थः । अन्यत्र हंसस्य रवेः करानवाप्तेरंशुस्पर्शाभावान्मन्दाक्षैरपटुदृष्टिभिर्लक्ष्या ग्राह्या । तैः छाया लक्ष्यते । न प्रकाश इति भावः । पश्चाल्लगति स्म पृष्ठलग्नाभूत् । प्राप्त्याशया तमन्वगादेवेत्यर्थः । 'रविश्वेतच्छदौ हंसौ । बलिहस्तांशवः कराः' इति चामरः ॥८॥

**शस्ता न हंसाभिमुखी तवेयं यात्रेति ताभिश्छलहास्यमाना ।**
**साह स्म नैवाशकुनीभवेन्मे भाविप्रियावेदक एष हंसः ॥ ९ ॥**

शस्तेति ॥ तवेयं हंसस्य श्वेतच्छदस्य सूर्यस्य च, अभिमुखी यात्रा गमनं शस्ता प्रशस्ता श्रेयस्करी न । शास्त्रविरोधात् श्रमसन्तापरूपदृष्टदो-

षाचेति भावः । सा इतीत्थं ताभिः सखीभिः छलेन व्याजोक्त्या । हास्यमाना परिहास्यमाना सती भाविप्रियावेदकः मङ्गलमूर्तित्वादागामि-शुभसूचकः एष हंसः, मे मम नाशकुनीभवेत् न दुःखशकुनीभवेत् । किन्तु सुशकुनमेव भवेदित्यर्थः । अपक्षी न भवेदिति च गम्यते । 'शकुनन्तु शुभाशंसा निर्मिते शकुनः पुमान्' इति विश्वः, अभूततद्भावेच्विः । प्रार्थनायां लिङ् । इत्याह स्म अवोचत । "लट् स्म" इति भूतार्थे लट् । "ब्रुवः पञ्चानाम्" इत्याहादेशः । एतेन तदीययात्रानिषेधोक्तदोषः परिहृतो वेदितव्यः ॥ ९ ॥

हंसोऽप्यसौ हंसगतेस्सुदत्याः पुरःपुरश्चारु चरन् बभासे ।
वैलक्ष्यहेतोर्गतिमेतदीयामग्रेऽनुकृत्योपहसन्निवोच्चैः ॥ १० ॥

एवं दमयन्तीव्यापारमुक्त्वा सम्प्रति हंसव्यापारमाह—हंस इति ॥ असौ हंसोऽपि हंसस्य गतिरिव गतिर्यस्यास्तस्याः सुदत्याः शोभनदन्तायाः भैम्याः । सुदती व्याख्याता । पुरःपुरः । वीप्सायां द्विर्भावः । अग्रे समन्तादित्यर्थः । चारु चरन् रम्यं गच्छन्, वैलक्ष्यमेव हेतुः, तस्य वैलक्ष्यहेतोः । अयं मामपि विडम्बयतीति तस्या विस्मयजननार्थमित्यर्थः । 'विलक्षो विस्मयान्वितः' इत्यमरः । "षष्ठी हेतुप्रयोगे" इति । एतदीयां गतिमग्रेऽनुकृत्याभिनीयोच्चैरुपहसन्निवेत्युत्प्रेक्षा । बभासे बभौ । यथा लोके परिहासकास्तच्चेष्टाद्यनुकरणेन परान्विलक्षयन्ति तद्वदिति भावः ॥१०॥

पदे पदे भाविनि भाविनी तं यथा करप्राप्यमवैति नूनम् ।
तथा सखेलं चलता लतासु प्रतार्य तेनाचकृषे कृशाङ्गी ॥ ११ ॥

पदे पद इति ॥ भावयतीति भाविनी तद्ग्रहणमेव मनसा भावयन्ती कृशाङ्गी भैमी, भाविनि भविष्यति, अनन्तर इत्यर्थः । "भविष्यति गम्यादय" इति साधुः । पदे पदे तं हंसं यथा करप्राप्यं करग्राह्यम्, नूनं निश्चितं अवैति प्रत्येति, तथा सखेलं सलीलं चलता गच्छता, तेन हंसेन प्रतार्य वञ्चयित्वा लतासु, आचकृषे आकृष्टा एकान्तं नीतेत्यर्थः ॥ ११ ॥

रुषा निषिद्धालिजनां यदैनां छायाद्वितीयां कलयाञ्चकार ।
तदा श्रमाम्भःकणभूषिताङ्गीं स कीरवन्मानुषवागवादीत् ॥१२॥

रुषेति ॥ यदा, रुषा निषिद्धालिजनां निवारितसखीजनां, एनां छायैव द्वितीया यस्यास्तामेकाकिनीं, कलयाञ्चकार विवेद । तदा, श्रमाम्भःकणैः भूषिताङ्गीं स्विन्नगात्रीं तां, स हंसः कीरवच्छुक इव मनुष्यस्येव वाग्यस्य स सन्नवादीत् ॥ १२ ॥

अये कियद्यावदुपैषि दूरं व्यर्थं परिश्राम्यसि वा किमर्थम् ।
उदेति ते भीरपि किन्नु बाले विलोकयन्त्या न घना वनालीः ॥

अये इति ॥ अये बाले, व्यर्थं कियद्दूरं, यावदुपैषि उपैष्यसि । "यावत् पुरा निपातयोर्लट्" इति लट् । किमर्थं परिश्राम्यसि वा । घनाः सान्द्राः वनालीर्वनपङ्क्तीः विलोकयन्त्यास्ते भीरपि नोदेति किन्नु ॥ १३ ॥

वृथार्पयन्तीमपथे पदं त्वां मरुल्ललत्पल्लवपाणिकम्पैः ।
आलीव पश्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनालिः ॥ १४ ॥

वृथेति ॥ वृथा व्यर्थमेव । न पन्थाः अपथम् । "ऋक्पूः" इत्यादिना समासान्तोऽच् । "अपथं नपुंसकम्" इति नपुंसकत्वम् । तस्मिन्नपथे दुर्गमार्गे अकृत्ये च पदं पादं व्यवसायञ्च । अर्पयन्तीं कुर्वन्तीं त्वाम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । मरुता ललन् चलन् पल्लव एव पाणिस्तस्य कम्पैः कपोतहुङ्कार एव गीः तया च । इयं वनालिः आलीव सखीव, प्रतिषेधति । पश्य । अस्य वाक्यार्थः कर्म । यथा लोके अमार्गप्रवृत्तं सुहृज्जनः पाणिना वाचा च वारयति तद्वदित्यर्थः । अत एव पल्लवपाणिरित्यादौ रूपकाश्रयणम् । तत्सङ्कीर्णा चेयमालीवेत्युपमा ॥ १४ ॥

धार्यः कथंकारमहं भवत्या वियद्विहारी वसुधैकगत्या ।
अहो शिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन ॥

धार्य इति ॥ एकत्रैव गतिर्यस्यास्तया एकगत्या वसुधायामेकगत्या, वसुधामात्रचारिण्येत्यर्थः । शिवभागवतवत्समासः । भवत्या वियद्विहारी खेचरोऽहम् । कथंकारं कथमित्यर्थः । "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्"

इति कथं शब्दोपपदात्करोतेर्णमुल्प्रत्ययः । धार्यः धर्तुं गृहीतुं शक्य इत्यर्थः । 'शकि लिङ् च' इति चकाराच्छक्त्यार्थे कृत्यप्रत्ययः । अनेन स्मरस्य सख्या सखिना तदुद्दीपकेन वयसा यौवनेन ॥ सखिशब्दस्य भाषितपुंस्कत्वात् पुँवद्भावः । तव शिशुत्वं शैशवं, न खण्डितं न निवर्तितम् । अहो विरुद्धवयसोरेकत्र समावेशादाश्चर्यमित्यर्थः । अधार्यत्वस्य वसुधागतिवियद्विहारपदार्थे हेतुकत्वादेकः, काव्यलिङ्गभेदः । तथा शैशवाखण्डनस्य पूर्ववाक्यार्थे हेतुकत्वादपर इति सजातीयसङ्करः ॥ १९ ॥

**सहस्रपत्रासनपत्रहंसवंशस्य पत्राणि पतत्रिणः स्मः ।**
**अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥**

अथ प्रस्तुतोपयोगितया निजान्ववायं निवेदयति—सहस्रेति ॥ सहस्रपत्रासनस्य कमलासनस्य, पत्रहंसाः वाहनहंसास्तेषां वंशस्य कुलस्य वेणोश्च, पत्रानि वाहनानि पर्णाणि च । 'वंशौ वेणौ कुले वर्गे । पत्रं स्याद्वाहने पर्ण ' इति च विश्वः । पतत्रिणः स्मः ब्रह्मवाहनहंसवंश्या वयमित्यर्थः । अस्मानिव पश्यन्ति तानित्यस्माद्दृशस्तेषामस्मद्विधानाम् । "त्यदादिषु" इत्यादिना दृशेः क्विन्प्रत्ययः । चाटुषु सुभाषितेषु ये रसाः श्रृङ्गारादयः त एवामृतानि स्वर्लोके लोकाः जनाः । ' लोकस्तु भुवने जन' इत्यमरः । तेभ्यः इतरैर्मनुष्यैर्दुर्लभानि ॥ १६ ॥

**स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो भजामः ।**
**अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते ॥१७॥**

अथ स्वकार्यस्य कनकत्वे कारणमाह—स्वर्गेति ॥ स्वर्गापगा स्वर्णदी । तस्यां हेममृणालिन्यः कनककमलिन्यः, तासां या नालाः काण्डाः, यानि मृणालानि कन्दाश्च । अत्र मृणालिनीशब्दस्य । अथ शब्दानुशासनं केषां शब्दानामितिवत्समासे गुणभूतेन सम्बन्धः सोढव्यः । 'नाला नालम्' इत्यमरवचनात् स्त्रीलिङ्गनिर्देशः ॥ न च, तत्रापि सन्देहः कार्यः । तद्व्याख्यानेषु देशान्तरकोशेषु च, सर्वत्र स्त्रीलिङ्गपाठस्यैव दर्शनात् । तथात्रैव प्रथमसर्गे प्रयुज्यते । मृदुत्वमप्रौढमृणालनालयेति । मृणालं स्याद्बिसः कन्द' इति

हलायुधः । तेषामग्राणि भुञ्जत इति तद्भुजः, वयमिति शेषः । अन्नानुरूपां आहारसदृशीं तनोः शरीरस्य रूपक्रर्द्धिं वर्णसमृद्धिम् । "ऋत्यक" इति प्रकृतिभावः । भजामः प्राप्ताः स्म इत्यर्थः । तथाहि—कार्यं जन्यद्रव्यम् । निदानादुपादानकारणात् । "आख्यातोपयोग", इत्यपादानता । गुणान् रूपादिविशेषगुणान्, अधीते प्राप्नोतीत्यर्थः । प्राप्तिविशेषवाची इण्धातुः । प्रायेणाहारपरिणतिपूर्विकाः प्राणिनां कायकान्तय इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १७ ॥

धातुर्निदेशादिह नैषधीयं लीलासरस्सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥ १८ ॥

आत्मनः क्ष्मालोकसञ्चारे कारणमाह—धातुरिति ॥ धातुः ब्रह्मणः, नियोगादादेशात्, इह भूलोके, नैषधीयं लीलासरः सेवितुं क्रीडासरसि विहर्तुमित्यर्थः । आगतेषु हैमेषु हेममयेषु, विकारार्थेऽण्प्रत्ययः । "नस्तद्धित" इति टिलोपः । हंसेषु मध्ये अहमेक एव भूलोकविलोकने उत्कः उत्सुकस्सन् । 'दुर्मनविमना अन्तर्मनास्स्यादुत्क उन्मनाः' इत्यमरः । उत्क उन्मना इत्युच्छब्दात्कप्रत्ययान्तो निपातः । भ्रमामि पर्यटामि ॥ १८ ॥

विधेः कदाचिद् भ्रमणीविलासे श्रमातुरेभ्यस्स्वमहत्तरेभ्यः ।
स्कन्धस्य विश्रान्तिमदां तदादि श्राम्यामि नाविश्रमविश्वगोऽपि॥

अनवरतभ्रमणेऽपि श्रमजये कारणमाह–विधेरिति ॥ कदाचिद्विधेर्ब्रह्मणः भ्रमणीविलासे भुवनभ्रमणविनोदे श्रमादातुरेभ्यः अवसन्नेभ्यः स्वमहत्तरेभ्यः स्वकुलवृद्धेभ्यः स्कन्धस्यांसस्य । 'स्कन्धो भुजशिरोंऽसो स्त्री' इत्यमरः । विश्रान्तिम् । अदां प्रादाम् । स्वयमेक एव वहामीत्यर्थः । ददातेर्लुङ् । "गातिस्था" इत्यादिना सिचो लुक् । तदादि तत्प्रभृति, अविश्रममनवरतम् । "नोदात्तोपदेशस्य" इत्यादिना श्रमेर्घञ् वृद्धिप्रतिषेधः । विश्वगोपि विश्वं गच्छन्नपि । अतोऽन्यत्रापि दृश्यत इति गमेर्डप्रत्ययः । न श्राम्यामि न खिद्ये ॥ १९ ॥

बन्धाय दिव्ये न तिरश्चि कश्चित्पाशादिरासादितपौरुषस्स्यात्।
एकं विना मादृशि तं नरस्य स्वर्भोगभाग्यं विरलोदयस्य ॥२०॥

अथ व्याधादिबन्धभयमपि न मेऽस्तीत्याह—बन्धायेति ॥ मादृशि दिव्ये तिरश्चि विषये विरलोदयस्य दुर्लभजन्मनो नरस्य मर्त्यस्य प्रायेणैवं-विधो नास्तीत्यर्थः। अन्यत्र, विरो विगतरेफः, स चासौ लोदयो लोदय-वांश्च। मत्वर्थीयोकारः। तस्य रेफस्थानाविष्टलकारस्येत्यर्थः ( नलस्येति भावः ) शब्दधर्मोऽर्थ उपचर्यते। भुज्यत इति भोगः सुखं, स्वर्भोगस्य स्वर्गसुखस्य भाग्यम्, तत्प्रापकादृष्टमित्यर्थः। स्वप्राप्तेस्तत्प्रायत्वादिति भावः। तदेकं विना कश्चित्पाशादिः पाशाद्युपायः, बन्धाय बन्धनार्थं, आसादितपौरुषः प्राप्तव्यापारः न स्यात्। स्वर्भोगभाग्यैकसुलभा वयं नोपायान्तरसाध्या इति भावः। अस्मादृक्संसर्गादन्यः को नाम स्वर्गपदार्थ इति भावः ॥ २० ॥

इष्टेन पूर्तेन नलस्य वश्यास्स्वर्भोगमत्रापि सृजन्त्यमर्त्याः ।
महीरुहो दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति ॥ २१ ॥

तच्च भाग्यं नलस्यैवास्तीत्याह—इष्टेनेति ॥ इष्टेन यागेन पूर्तेन खातादि कर्मणा। 'त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत्' इत्यमरः। वश्याः वश्यंगताः, वशंगत इति प्राग्दीव्यतीयो यप्रत्ययः। अमर्त्याः देवाः, नल-स्यात्रापि भूलोकेऽपि स्वर्भोगं सृजन्ति स्वर्गसुखं सम्पादयन्तीत्यर्थः। ननु देवाश्च कथं कालान्तरभोग्यं स्वर्गसुखमिहेदानीं सृजन्तीत्याशङ्क्य दृष्टान्तेन परिचष्टे। महीरुहो वृक्षाः दोहदस्याकालप्रसवोत्पादकस्य द्रव्यस्य, सेकस्य जलसेचनस्य शक्तेः सामर्थ्यात्। "तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया" इति शब्दार्णवे। समान-कालावाद्यन्तावुत्पत्तिविनाशावस्येत्याकालिकः उत्पत्त्यनन्तरविनाशीत्यर्थः। "आकालिकडाद्यन्तवचने" इति समानकालशब्दस्याकालशब्दादेशे ठञ्प्रत्य-यान्तो निपातः। प्रकृतेस्त्वकालभवं कोरकमुद्गिरन्तीत्यर्थः। दोहदवशा

वृक्षा इव देवा उत्कटपुण्यवशाददेशकालेऽपि फलं प्रयच्छन्तीत्यर्थः । दृष्टान्तालङ्कारः ॥ २१ ॥

सुवर्णशैलादवतीर्य तूर्णं स्वर्वाहिनीवारिकणावकीर्णैः ।
तं वीजयामः स्मरकेलिकाले पक्षैर्नृपं चामरबद्धसख्यैः ॥ २२ ॥

स्वभोगमेवाह—सुवर्णेति ॥ सुवर्णशैलात् मेरोः तूर्णमवतीर्य स्वर्वाहिनीवारिकणावकीर्णैः मन्दाकिनीजलबिन्दुसंपृक्तैः, चामरेषु बद्धसख्यैः तत्सदृशैरित्यर्थः । पक्षैः पतत्रैः स्मरकेलिकाले तं नृपं वीजयामः । तादृक् पक्षवीजनैः सुरतश्रान्तिमपनुदाम इत्यर्थः ॥ २२ ॥

क्रियेत चेत्साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासैस्तावत्क्षमानामपदं बहु स्यात् ॥

क्रियेतेति ॥ साधुविभक्तिचिन्ता सुजनविभागविचारः, क्रियेत चेत् । तदा, सा नलाभिधाना व्यक्तिः मूर्तिः, प्रथमाभिधेया प्रथमं परिगणनीया । कुतः, या व्यक्तिः, स्वौजसां स्वतेजसां विलासैः व्याप्तिभिः, तावद्बहु तथा प्रभूतम् । नास्ति नाम नतिर्यस्येत्यनाम अनम्रं पदं परराष्ट्रं, साधयितुं स्वायत्तीकर्तुं क्षमा शक्ता स्यात् । अन्यत्र, साधु सम्यक् विभक्तिचिन्ता सप्तविभक्तिविचारः, क्रियेत चेत् । प्रथमा व्यक्तिः प्रथमा विभक्तिः, अभिधेया विचार्या, या स्वौजसाम् सु, औ, जस् इत्येषां प्रत्ययानां, विलासैः विन्यासैः, तावद्बहु अनेकं, नामपदं सुबन्तपदं, वृक्ष इत्यादिकं, साधयितुं निष्पादयितुं, क्षमा । अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रितत्वाल्लक्षणायाश्चानुपपत्त्यभावेनाभावादप्रकृतार्थप्रतीतेर्ध्वनिरेव ॥ २३ ॥

राजा स यज्वा विबुधव्रजत्रा कृत्वाध्वराज्योपमयेव राज्यम् ।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः पूर्वं त्वहो शेषमशेषमन्त्यम् ॥

राजेति ॥ यज्वा विधिनेष्टवान् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । सुयज्वोर्ङ्वनिप् । श्रिताः आश्रिताः, ये श्रोत्रियाः छान्दसाः, अधीतवेदा इत्यर्थः । 'श्रोत्रियश्छान्दसौ समौ' इत्यमरः । 'श्रोत्रियः छन्देऽपीति' इति निपातः । तत्सात्कृता दानेन तदधीना कृता श्रीस्सम्पद्येन सः स राजा नलः,

अध्वरेषु यज्ञेषु, यद्राज्यं तदुपमया तत्सादृश्येनैव, तद्वदेवेत्यर्थः । राज्यम्, विबुधा देवाः विद्वांसश्च' तद्वत्रा दानेन तत्सङ्घाधीनं कृत्वा, "तद्धित-श्चासर्वविभक्तिः" इत्यव्ययसंज्ञा । चकारात् "देये त्रा च" इति त्राप्रत्ययः । "त्रा च" इति चकारादितरत्र सातिप्रत्ययश्च । पूर्वं पूर्वनिर्दिष्टम् । अध्वरा-ज्यं शेषं हुतशेषं भुङ्क्ते । अन्त्यं पश्चान्निर्दिष्टं, राज्यम् अशेषं कृत्स्नं अख-ण्डं भुङ्क्ते । अहो । उपयुक्तादन्यः शेषः । तथा च, पूर्वस्य तथाभूतस्य शेषत्वम् । अन्त्यस्याशेषत्वञ्च कथं विरोधादित्याश्चर्यम् । अत एव विरोधा-भासोऽलङ्कारः ॥ २४ ॥

दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे ।
सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम् ॥२५॥

दारिद्र्येति ॥ दारिद्र्यं दारयति निवर्तयतीति दारिद्र्यदारी, तस्य द्रविणौघस्य धनराशेर्वर्षैः अर्थिसार्थे विषये अमोघमेघव्रतं वर्षुकत्वलक्षणं यस्य तम् । सन्तुष्टं दानहृष्टम्, इष्टदेवं यज्ञाराधितसुरं लोकनाथं, तं नलं, के नाम इष्टानीप्सितानि, न नाथन्ति न याचन्ते । सर्वेऽपि नाथन्त्येवेत्यर्थः । नाथतेर्याञ्चार्थस्य दुहादित्वाद् द्विकर्मकत्वम् ॥ २५ ॥

अस्मत्किल श्रोत्रसुधां विधाय रम्भा चिरं भामतुलां नलस्य ।
तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा ॥ २६ ॥

अस्मदिति ॥ सा प्रसिद्धा रम्भा, नलस्य, अतुलामनुपमां, भां कान्तिं सौन्दर्यं चिरं अस्मत् मत्तः श्रोत्रसुधां विधाय कर्णामृतं कृत्वा, रसा-दाकर्ण्येत्यर्थः । तत्र तस्मिन्नले, अनुरक्ता सती, तं नलं, अनाप्याप्राप्य । आङ्पूर्वादाप्नोतेः क्त्वा ल्यपि नञ्समासः । अन्यथात्वसमासे ल्यबादेशो न स्यात् । तन्नामगन्धात् तस्य नलस्य नामाक्षरस्पर्शाद्धेतोः, नलकूबरं कुबेरात्मसम्भवं भेजे किल । तादृक् तस्य सौन्दर्यमित्यर्थः ॥ २६ ॥

स्वर्लोकमस्माभिरितः प्रयातैः केलीषु तद्गानगुणान्निपीय ।
हा हेति गायन् यदशोचि तेन नाम्नापि हाहा हरिगायनोऽभूत् ॥

स्वर्लोकमिति ॥ केलीषु विनोदगोष्ठीषु, तस्य नलस्य, कर्तुः गाने गुणान्विशेषान्, निपीयास्वाद्य, इतोऽस्माल्लोकात्, स्वर्गलोकं प्रयातैरस्माभिः, हरिगायनः इन्द्रगायको गन्धर्वः । "ण्युल् च" इति गायतेः शिल्पे ण्युल्-प्रत्ययः । गायन् यद्यस्मात् हा हेत्यशोचि शोचितः तेनैव कारणेन नाम्नापि हा हा अभूत् । न त्वालापाक्षरानुकारादिति भावः । 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसः' इत्यमरः । आलापाक्षरानुकारनिमित्तोऽयं हाहा शब्द आकारान्तः । "पुंसि च" इति केचित् । अत एव 'हाहा खेदे, हूहू हर्षे, गन्धर्वेऽभूत्वनव्ययः' इति विश्वः । 'अव्ययमेव' इति श्रीभोजराजः । अत्र शोकनिमित्तासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तथा च गन्धर्वातिशायि गानमस्येति वस्तु व्यज्यते ॥ २७ ॥

शृण्वन् सदारस्तदुदारभावं हृष्यन्मुहुर्लोम पुलोमजायाः ।
पुण्येन नालोकत नाकपालः प्रमोदबाष्पावृतनेत्रमालः ॥ २८ ॥

शृण्वन्निति ॥ नाकपालः इन्द्रः, सदारः सवधूकः, तस्य नलस्य, उदारभावमौदार्यम्, शृण्वन् । अत एव, प्रमोदबाष्पैः आनन्दाश्रुभिः, आवृतनेत्रमालः तिरोहितदृष्टिस्सन्, पुलोमजायाः शच्याः, मुहुः हृष्यत् नलानुरागादुल्लसत्, लोम रोमाञ्चम्, पुण्येन शचीभाग्येन, नालोकत नापश्यत् । अन्यथा, मानसव्यभिचारापराधाद्दण्ड्यैव स्यादित्यर्थः ॥ २८ ॥

सापीश्वरे शृण्वति तद्गुणौघान् प्रसह्य चेतो हरतोऽर्धशम्भुः ।
अभूदपर्णाङ्गुलिरुद्धकर्णा कदा न कण्डूयनकैतवेन ॥ २९ ॥

सेति ॥ ईश्वरे, प्रसह्य चेतो हरतः बलान्मनोहारिणः, तस्य नलस्य, गुणौघान् शृण्वति सति । सा प्रसिद्धा अर्धं शम्भुः अर्धशम्भुः, शम्भोरर्धाङ्गभूतेत्यर्थः । तथा चापसरणमशक्यमिति भावः । अपर्णा पार्वत्यपि, कदा कन्डूयनकैतवेन कण्डूयापनोदनव्याजेन, अङ्गुल्या रुद्धः पिहितः, कर्णो यया सा, नाभूत् सर्वदा अभूदेवेत्यर्थः । अन्यथा, चित्तचलनभयादिति भावः

अलं सजन् धर्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडस्स वक्राम् ॥

अलमिति ॥ विधाता ब्रह्मा, अलमत्यन्तं, धर्मविधौ सुकृताचरणे सजन् धर्मासक्तस्सन्नित्यर्थः । वाणीं स्वभार्यां वाग्देवीं वर्णात्मिकाञ्च, मौनस्य वाग्यमनव्रतस्य, मिषेण रुणद्धि । नलकथाप्रसङ्गान्निरुन्धे तस्या उभय्या अपि तदासङ्गभयादिति भावः । किन्तु, वेदजडः छान्दसः, स विधाता, तामुभयीमपि वाणीम् । तस्य नलस्य, कण्ठग्रीवामालिङ्ग्य मुखमाश्रित्य च, रसस्य तृप्तां तद्रागसन्तुष्टाम् । अन्यत्र शृङ्गारादिरसपुष्टां सम्बन्धसामान्ये षष्ठी । "पूरणगुण" इत्यादिना षष्ठीसमासनिषेधादेव ज्ञापनादिति केचित् । वक्रां प्रतिकूलकारिणीं, वक्रोक्त्यलङ्कारयुक्ताञ्च, न वेद न वेत्ति । "विदो लटो वा" इति णलादेशः । अशक्यरक्षाः स्त्रिय इति भावः । अत्र प्रस्तुतवाग्देवीवृत्तान्तवर्णनादप्रस्तुतवर्णात्मकवाणीवृत्तान्तप्रतीतेः प्रागुक्तरीत्या ध्वनिरेवेत्यनुसन्धेयम्

**श्रियस्तदालिङ्गनभूर्न भूता व्रतक्षतिः कापि पतिव्रतायाः ।**
**समस्तभूतात्मतया न भूतं तद्भर्तुरीर्ष्याकलुषाऽणुनापि ॥ ३१ ॥**

श्रिय इति ॥ पतिव्रतायाः श्रियः तद्भर्तुर्विष्णोः समस्तभूतात्मतया सर्वभूतात्मकत्वेन, नलस्यापि विष्णुरूपत्वेनेत्यर्थः । तदालिङ्गनभूः नलाश्लेषभवा । कापि व्रतक्षतिः पातिव्रत्यभङ्गो न भूता नाभूत् । अत एव, तद्भर्तुर्विष्णोश्च ईर्ष्यया नलालिङ्गनभुवा अक्षमया, यत्कलुषं कालुष्यं मनः क्षोभः सुखादित्वेनास्यधर्मधर्मिवचनत्वात् । अत एव क्षीरस्वामी च—'शस्तञ्चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च' इत्यत्रादिशब्दाच्छ्रेयःकलुषशिवभद्रादीन् सञ्जग्राह । तस्याणुना लेशेनापि, न भूतं नाभावि । नपुंसके भावे क्तः । अत्र शच्यादिचित्तचाञ्चल्योक्तेः नलसौन्दर्ये तात्पर्यान्नानौचित्यदोषः ॥ ३१ ॥

**धिक् तं विधेः पाणिमजातलज्जं निर्माति यः पर्वणि पूर्णमिन्दुम् ।**
**मन्ये स विज्ञः स्मृततन्मुखश्रीः कृतार्धमौज्झद्धरमूर्ध्नि यस्तम् ॥**

धिगिति ॥ तमजातलज्जं निस्त्रपं विधेः पाणिं धिक् । यः पाणिः स्मृततन्मुखश्रीरपि, पर्वणि । जातावेकवचनम् । पर्वस्वित्यर्थः । पूर्णमिन्दुं निर्माति । अद्यापीति भावः । स तु विज्ञः अभिज्ञ इति मन्ये । यः पाणिः, श्रिततन्मुखश्रीस्सन् तमिन्दुं कृतः अर्धं एकदेशो यस्य तं कृतार्धम् अर्धनिर्मि-

तमेव । हरमूर्ध्नि भवशिरसि । औज्झदत्यजत । अतीन्दुसौन्दर्यमस्यास्य-मिति भावः ॥ ३२ ॥

निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः।
सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

निलीयत इति ॥ विधुश्चन्द्रः स्वजैत्रं स्वस्य जेतृ । प्रज्ञादित्वात स्वार्थेऽण्प्रत्ययः । तस्य नलस्य मुखं, नोऽस्माकं मुखाच्छ्रुत्वा, ह्रीविधुरो लज्जाक्लिष्टस्सन् । सूरे सूर्य,, दर्शेष्विति भावः । कदापि समुद्रस्य पूरे जलौघे, कदाचिद् अभ्रे खे भ्रमतामटतां, अभ्राणां मेघानां, गर्भे उदरे, निलीयते अन्तर्धत्ते । कदाचिदग्रतः स्थातुं नोत्सहत इत्यर्थः । अत्र विधोः स्वाभाविके सूर्यादिप्रवेशे पराजयप्रयुक्तह्रीनिलयनत्वोत्प्रेक्षा । व्यञ्जकाप्रयोगाद्गम्या ॥ ३३ ॥

संज्ञाप्य नस्स्वध्वजभृत्यवर्गान् दैत्यारिरत्यब्जनलास्यनुत्यै ।
तत्संकुचन्नाभिसरोजपीताद्धातुर्विलज्जं रमते रमायाम् ॥ ३४ ॥

संज्ञाप्येति ॥ दैत्यारिः विष्णुः, स्वध्वजस्य गरुडस्य भृत्यवर्गान् नोऽस्मान् अतिक्रान्तमब्जमत्यब्जं, अब्जविजयीत्यर्थः । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । तस्य नलस्य आस्यस्य नुत्यै स्तोत्राय । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । संज्ञाप्य सङ्केत्य । तया नुत्या, सङ्कुचता निमीलता, नाभिसरोजेन पीतात् तिरोहितात्, धातुः ब्रह्मणः, विलज्जं यथा तथा । रमायां रमते । अत्र विष्णोरुक्तव्यापारसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ३४ ॥

रेखाभिरास्ये गणनादिवास्य द्वात्रिंशता दन्तमयीभिरन्तः ।
चतुर्दशाष्टादश वात्र विद्या द्वेधापि सन्तीति शशंस वेधाः ॥ ३५ ॥

रेखाभिरिति ॥ अस्य नलस्य आस्ये, अन्तर्दन्तमयीभिः द्वात्रिंशतारेखाभिर्गणनात्सङ्ख्यानात, चतुर्दश वाष्टादश वा विद्याः, द्वेधाप्यत्रास्ये सन्ति सम्भवन्त्याग्रेनेति वेधाः शशंसेवेत्युत्प्रेक्षा । अत्र मनुः—"अङ्गानि

वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् । अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः ॥" इति ॥ ३५ ॥

**श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः ।**
**वासेन सम्यक् क्षमयोश्च तस्मिन् बुद्धौ न धर्मः खलु शेषबुद्धौ ३६**

श्रियाविति ॥ तस्य नरेन्द्रस्य, श्रियौ सौन्दर्यसम्पदौ, निरीक्ष्य । "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि कथ्यते" इति शाश्वतः । स्मरामरेन्द्रावपि न स्मरामः । किञ्च, तस्मिन्नरेन्द्रे क्षमयोः क्षितिक्षान्त्योः । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । तत्र सम्यग्वासेन नियतस्थित्या, शेषबुद्धौ फणिपतिबुद्धदेवौ, बुद्धौ न धर्मः चित्ते न धारयामः * । अत्र द्वयोरपि श्रियोः द्वयोरपि क्षमयोः, प्रकृतत्वात् केवलप्रकृतश्लेषः । तेन सौन्दर्यादिगुणैः स्मरादिभ्योऽधिक इति व्यतिरेको व्यज्यते । श्लेषयथासङ्ख्ययोः सङ्करः ॥ ३६ ॥

**विना पतत्रं विनतातनूजैस्समीरणैरीक्षणलक्षणीयैः ।**
**मनोभिरासीदनणुप्रमाणैर्न लङ्घिता दिक्कतमा तदश्वैः ॥ ३७ ॥**

विनेति ॥ पतत्रं विना, स्थितैरितिशेषः । विनतातनूजैः वैनतेयैः, अपक्षतार्क्ष्यैरित्यर्थः । ईक्षणलक्षणीयैः समीरणैश्चाक्षुषवायुभिः, अनणुप्रमाणैः अणुपरिमाणं मन इति काणादाः तद्विपरीतैः महापरिमाणैर्मनोभिः वैनतेयादिसमानवेगैरित्यर्थः । एवंविधैस्तदश्वैः कतमा दिक् न लङ्घितासीत् । सर्वापि विलङ्घितासीदित्यर्थः । अत्राश्वानां विशिष्टवैनतेयादित्वेन रूपणाद्रूपकालङ्कारः

**संग्रामभूमीषु भवत्यरीणामस्त्रैर्नदीमातृकता गतासु ।**
**तद्बाणधारापवनाशनानां राजव्रजीयैरसुभिस्सुभिक्षम् ॥ ३८ ॥**

सङ्ग्रामेति ॥ अरीणामस्त्रैरसृग्भिः, नद्येव माता यासां तास्तत्ता नदीमातृकता, नद्यम्बुसम्पन्नसस्याढ्यता । 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपा-

* धर्म इति रूपं चिन्त्यम् ; अथवा कवयो निरङ्कुशाः । बुद्धौ न दध्म इत्यभियुक्ताः पठन्ति ।

लितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्' इत्यमरः । "नद्यृतश्च"
इति कप् । "त्वतलोर्गुणवचनस्य" इति पुँवद्भावः । तां गतासु सङ्ग्राम-
भूमीषु, तस्य नलस्य बाणधारा बाणपरम्परास्ता एव पवनाशनाः सर्पाः, तेषां,
राजव्रजीयैः राजसङ्घसम्बन्धिभिः, " वृद्धाच्छः " असुभिः प्राणवायुभिः,
सुभिक्षं भिक्षाणां समृद्धिर्भवति । समृद्धावव्ययीभावः । नदीमातृकदेशेषु
सुभिक्षं भवतीति भावः । रूपकालंकारः ॥ ३८ ॥

**यशो यदस्याजनि संयुगेषु कण्डूलभावं भजता भुजेन ।**
**हेतोर्गुणादेव दिगापगालीकूलंकषत्वव्यसनं तदीयम् ॥ ३९ ॥**

यश इति ॥ संयुगेषु युद्धेषु, कण्डूलभावं कण्डूतिमत्त्वं, "सिध्मा-
दिभ्यश्च" इति मत्वर्थीयो लच् । भजता अस्य भुजेन यद्यशः अजनि
जनितम् । जनेर्ण्यन्तात्कर्मणि लुङ् । तदीयं तस्य यशस्सम्बन्धि । दिश
एव आपगाः नद्यः, तासामाल्यः, तासां कूलं कषतीति कूलंकषम् ।
शिवभागवतवत्समासः "सर्वकूल" इत्यादिना खचि मुमागमः । तस्य
भावस्तत्त्वम् । तत्र व्यसनमासक्तिः, हेतोः कारणस्य भुजस्य, गुणात्कण्डूल-
त्वादेव आगतमिति शेषः । अत्र यशसो दिक्कूलकषणानुमितायाः कण्डू-
लतायाः तत्कारणकण्डूलभुजगुणपूर्वकत्वमुत्प्रेक्ष्यते ॥ ३९ ॥

**यदि त्रिलोकी गणनापरा स्यात्तस्यास्समाप्तिर्यदि नायुषस्स्यात् ।**
**पारेपरार्धं गणितं यदि स्याद्गणेयनिश्शेषगुणोऽपि स स्यात् ॥**

यदीति ॥ किं बहुना, त्रयाणां लोकानां समाहारस्त्रिलोकी । कर्त्री ।
"तद्धितार्थ" इत्यादिना समाहारे द्विगुः । अकारान्तोत्तरपदो द्विगुः स्त्रियां
भाष्यते 'द्विगोः' इति ङीप् । गणनापरा नलगुणसंख्यानतत्परा । स्याद्यदि
तस्याः त्रिलोक्याः, आयुषस्समाप्तिर्न स्याद्यदि । अमरत्वं यदि स्यादि-
त्यर्थः । परार्धस्य चरमसंख्यायाः पारे पारेपरार्धम् । "पारे मध्ये षष्ठ्या वा"
इत्यव्ययीभावः । गणितं स्याद्यदि । परार्धात् परतो यदि संख्या स्यादि-
त्यर्थः । तदा स नलोऽपि गणेयाः गणयितुं शक्या निश्शेषास्सर्वे गुणा यस्य

सः तादृशः स्यात् । गणेय इत्यौणादिक एयप्रत्ययः । अत्र नलगुणानां गणेयत्वासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ ४० ॥

**अवारितद्वारतया तिरश्चामन्तःपुरे तस्य निविश्य राज्ञः ।**
**गतेषु रम्येष्वधिकं विशेषमध्यापयामः परमाणुमध्याः ॥ ४१ ॥**

एवं नलगुणाननुवर्ण्य गूढाभिसन्धिनात्मनस्तदन्तः पुरे परिचयं दर्शयति-**अवारितेत्यादि** ॥ तिरश्चां पक्षिणां, अवारितद्वारतया अप्रतिषिद्धप्रवेशतयेत्यर्थः । तस्य राज्ञो नलस्य, अन्तःपुरे निविश्य संस्थाय, परमाणुमध्या अतिसूक्ष्ममध्यास्तदङ्गनाः, रम्येषु गतेषु, गतिषु अधिकमपूर्वं, विशेषं भेदं, अध्यापयामः अभ्यासयामः । दुहादित्वाद्द्विकर्मकत्वम् ॥ ४१ ॥

**पीयूषधारानधराभिरन्तस्तासां रसोदन्वति मज्जयामः ।**
**रम्भादिसौभाग्यरहःकथाभिः काव्येन काव्यं सृजताद्दृताभिः ॥**

**पीयूषेति** ॥ किञ्च, पीयूषधाराभ्यः अनधराभिरन्यूनाभिः, अमृतसमानाभिः, काव्यं सृजता स्वयं प्रबन्धकर्त्रा । कवेरपत्येन पुंसा । काव्येन शुक्रेण । 'शुक्रो दैत्यगुरुः काव्य' इत्यमरः । "कुर्वादिभ्यो ण्यः" इति ण्यप्रत्ययः । आदृताभिः तस्यापि विस्मयकरीभिरित्यर्थः । रम्भादीनां दिव्यस्त्रीणां सौभाग्यं पत्युर्लभ्यं, तत्प्रयुक्ताभिः रहःकथाभिः रहस्यवृत्तान्तवर्णनाभिः, तासां नलान्तःपुरस्त्रीणां, अन्तरन्तःकरणं, रसोदन्वति शृङ्गाररससागरे, मज्जयामः अवगाहयामः ॥ ४२ ॥

**काभिर्न तत्राभिनवस्मराज्ञाविश्वासनिक्षेपवणिक्क्रियेऽहम् ।**
**जिह्रेति यन्नैव कुतोऽपि तिर्यक्कश्चित्तिरश्चस्त्रपते न तेन ॥ ४३ ॥**

**काभिरिति** ॥ किञ्च, यद्यस्मात्, तिर्यक् पक्षी कुतोऽपि जनात्, न जिह्रेति न लज्जत एव । 'ह्री लज्जायाम्' इति धातोर्लट् । "श्लौ" इति इति द्विर्भावः । तिरश्चोऽपि कश्चिज्जनो न त्रपते न लज्जते । तेन कारणेन, तत्रान्तःपुरे, काभिः स्त्रीभिः अहं अभिनवोऽपूर्वः स्मराज्ञा रतिरहस्यवृत्तान्तः, स एव विश्वासनिक्षेपः विश्वासेन गोप्यार्थः, तस्य वणिक् गोप्ता, न क्रिये न कृतोऽस्मि । सर्वासामप्यभवमेव विस्रम्भकथापात्रमित्यर्थः ॥ ४३ ॥

वार्ता च साऽसत्यपि नान्यमेति योगादरन्ध्रे हृदि यां निरुन्धे ।
विरिञ्चिनानाननवादधौतसमाधिशास्त्रश्रुतिपूर्णकर्णः ॥ ४४ ॥

अथ स्वस्यैव विश्वास्यत्वे हेतुमाह-वार्तेति ॥ विरिञ्चेर्ब्रह्मणो नानाननैर्बहुमुखैः, वादेन व्याख्यानेन, धौतस्य, शोधितस्य, समाधिशास्त्रस्य वाङ्नियमविद्यायाः, श्रुत्या श्रवणेन पूर्णकर्णः, चतुर्मुखादभ्यस्तवाङ्नियमविद्य इत्यर्थः । एवंभूतोऽहं, योगादुपायात्, यां वार्ताम्, अरन्ध्रे निरवकाशे, हृदि निरुन्धे नियच्छामि । अत एव सा वार्ता च लोकवार्ता च लोकवार्तापि । किमुत रहस्यवार्तेति भावः । असत्यपि विनोदार्थं कल्पितापि किमुत सतीति भावः । अन्यं नैति जनान्तरं न गच्छति, न कस्मैचित्कथ्यत इत्यर्थः । यथा ह्यसती दुश्चरे नीरन्ध्रस्थाने रुद्धा नान्यमेति तद्वदिति भावः । अतोऽहमास्तां विश्वास्य इति पूर्वेणान्वयः । अत्र वार्तानिरोधस्य विरिञ्चीत्यादिपदार्थहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

नलाश्रयेण त्रिदिवोपभोगं तवानवाप्यं लभते बतान्या ।
कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्याः ॥ ४५ ॥

अथ श्लोकद्वयेनाल्या नलानुरागमुद्दीपयति—नलेति ॥ तवानवाप्यं नलपरिग्रहाभावात् त्वया दुरापम् । "कृत्यानां कर्तरि वा" इति षष्ठी तृतीयार्थे । त्रिदिवः स्वर्गः । पृषोदरादित्वात्साधुः । तस्योपभोगं तादृग्भोगमित्यर्थः । तस्येन्द्रसमैश्वर्यत्वादिति भावः । अम्बुजिन्या दुर्लभं इन्दुपरिग्रहाभावात् दुष्प्रापं ज्योत्स्नोत्सवं चन्द्रिकाभोगं, इन्दोः कर्तुः परिग्रहेण कुमुदान्यस्यां सन्तीति कुमुद्वतीव कुमुदिनीव । कुमुदनडवेतसेभ्यो ड्मतुप् । "मादुपधायाश्च" इत्यादिना मकारस्य वकारः । नलस्य कर्तुराश्रयणेन स्वीकारेण, अन्या लभते । बतेति खेदे । ईदृग्भोगोपेक्षिणी त्वं बुद्धिमान्द्यान्न शोचसीति भावः ॥ ४५ ॥

तन्नैषधानूढतया दुरापं शर्म त्वयास्मत्कृतचाटुजन्म ।
रसालवन्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥

तदिति । किञ्च, तत्प्रसिद्धम् । अस्माभिः कृतेभ्यः चाटुभ्यः प्रियवाक्येभ्यः, जन्म यस्य तत्तजन्यमित्यर्थः । चाटुग्रहणं पूर्वोक्तनिजपक्षवीजनादीनामप्युपलक्षणम् । शर्म सुखं, त्वया अप्राप्तो वसन्तो यया तया, वसन्तानधिष्ठितयेत्यर्थः । रसालवन्या सहकारश्रेण्या, मधुपानुविद्धं सौभाग्यं भृङ्गसङ्गजन्यं, रामणीयकमिव नैषधेन नलेन, अनूढतया अपरिणीतत्वेन हेतुना, दुरापं दुष्प्रापं, तस्मात्ते नलपरिग्रहे यत्नः कर्तव्यः इति भावः ॥ ४६ ॥

**तस्यैव वा यास्यसि किं न हस्तं दृष्टं विधेः केन मनः प्रविश्य ।**
**अजातपाणिग्रहणासि तावद्रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥**

अथ पुनरस्या नलप्राप्त्याशां जनयन्नाह—तस्यैवेत्यादि ॥ यद्वा, तस्य नलस्यैव हस्तं किं न यास्यसि यास्यत्येव, केन विधेर्मनः प्रविश्य दृष्टम् । विध्यानुकूल्यमपि सम्भावितमिति भावः । कुतः, तावदद्यापि अजातपाणिग्रहणा अकृतविवाहा, असि । तवायं विवाहविलम्बो नलपाणिग्रहणार्थ एव किं न स्यादिति भावः । किञ्च, रूपं सौन्दर्यं, स्वरूपं, स्वभावः, शीलमिति यावत् । तयोरतिशयः प्रकर्षः, तस्याश्रयश्चासि योग्यगुणाश्रयत्वाच्च तद्धस्तमेव गमिष्यसीति भावः ॥ ४७ ॥

**निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः ।**
**विधेरपि स्वारसिकः प्रयासः परस्परं योग्यसमागमाय ॥ ४८ ॥**

सत्यं, विधिसङ्कल्पस्तु दुर्ज्ञेय इत्यत आह—निशेति ॥ निशा निशया । "पद्दन्" इत्यादिना निशाया निशादेशः । शशाङ्कं, शिवया गौर्या, गिरीशं शिवं, श्रिया हरिञ्च, योजयतो विधेः, प्रयासः प्रयत्नोऽपि, परस्परम् । योग्यसमागमायैव योग्यसंघट्टनायैव, स्वारसिकः स्वरसप्रवृत्तः, प्रतीतः ज्ञातः । निशाशशाङ्कादिदृष्टान्ताद्विधिसङ्कल्पोऽपि सुज्ञात इति भावः ॥ ४८ ॥

**वेलातिगस्त्रैणगुणाब्धिवेणी न योगयोग्यासि नलेतरेण ।**
**सन्दृभ्यते दर्भगुणेन मल्लीमाला न मृद्वी भृशकर्कशेण ॥ ४९ ॥**

नलान्यसम्बन्धस्त्वयोग्य इत्याह—वेलातिगेति ॥ वेलामतिगच्छन्तीति वेलातिगाः निस्सीमाः, स्त्रीणामिमे स्त्रैणाः । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति नञ्प्रत्ययः । गुणाः सौशील्यादयः, त एवाब्धिः, तस्य वेणी प्रवाहभूता । त्वमिति शेषः । 'वेलाब्धिजलबन्धने । काले सोम्नि च । वेणी तु केशबन्धे जलस्रुतौ' इति वैजयन्ती । नलादितरेण योगयोग्या योगार्हा, नासि । तथा हि मृद्वी मल्लीमाला भृशकर्कशेण दर्भगुणेन कुशसूत्रेण, न सन्दृभ्यते न गुम्फ्यते । 'दृभि ग्रथने' इति धातोः कर्मणि लट् । व्यतिरेकेण दृष्टान्तालङ्कारः ॥ ४९ ॥

विधिं वधूसृष्टिमपृच्छमेव तद्यानयुग्यो नलकेलियोग्याम् ।
त्वन्नामवर्णा इव कर्णपीता मयास्य संक्रीडति चक्रचक्रे ॥ ५० ॥

विधिमिति ॥ किञ्च, विधिं ब्रह्माणं, नलस्य केलेः क्रीडायाः, योग्यामर्हां, वधूसृष्टिं स्त्रीशिल्पं, तस्य विधेः यानस्य रथस्य, युग्यो युगवोढा, तत्र परिचित इत्यर्थः । तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः । अहमपृच्छमेव । दुहादित्वाद्द्विकर्मकत्वम् । मया अस्य तद्यानस्य, चक्रचक्रे रथाङ्गव्रजे, संक्रीडति कूजति सति "समोऽकूजने" इति कूजने नात्मनेपदम् । त्वन्नामवर्णा इव कर्णेन पीता गृहीताः न केवलं लिङ्गात्किन्त्वागमादपि ज्ञातोऽयमर्थ इत्यर्थः ॥ ५० ॥

अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनो वा ।
जनापवादार्णवमुत्तरीतुं विधा विधातुः कतमा तरिस्स्यात् ५१॥

अन्येनेति ॥ किञ्च, त्वयि अन्येन नलेतरेण पत्या, योजितायां, विज्ञत्वकीर्त्या गतजन्मनः अभिज्ञत्वख्यात्यैव निर्गतायुष इत्यर्थः, विधातुर्वा । जनापवादार्णवं उत्तरीतुं निस्तरितुम् । 'वृतो वा, इतीटो दीर्घः । कतमा विधा कः प्रकारः तरिस्तरिणी स्यात् न कोऽपीत्यर्थः । अतो दैवगत्या नल एव ते भर्तेति भावः ॥ ५१ ॥

आस्तां तदप्रस्तुतचिन्तयालं मयासि तन्वि श्रमितातिवेलम् ।
सोऽहं तदागः परिमार्ष्टुकामस्तवेप्सितं किं विदधेऽभिधेहि ॥५२

इत्थमाशामुत्पाद्य अस्याः चित्तवृत्तिपरिज्ञानाय प्रसङ्गान्तरेण निगमयति—आस्तामिति ॥ तत्पूर्वोक्तं, आस्तां तिष्ठतु, अप्रस्तुतचिन्तया अलं तया साध्यं नास्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया । अत एवाह "न केवलं श्रूयमाणक्रियापेक्षया कारकोत्पत्तिः । किंतु गम्यमानक्रियापेक्षयापि" इति न्यासोद्योतकारः । किन्तु, हे तन्वि कृशाङ्गि, मया अतिवेलमत्यन्तं, श्रमितासि खेदितासि । श्रमेर्ण्यन्तात्कर्मणि क्तः । अहं तच्छ्रमरूपं आगोऽपराधं परिमार्ष्टुकामः परिहर्तुकामः । "तुं काममनसोरपि" इति मकारलोपः । किं तवेप्सितं, विदधे । ते मनोरथं पूरयामि अभिधेहि ब्रूहि ॥ ५२ ॥

**इतीरयित्वा विरराम पत्री स राजपुत्रीहृदयं बुभुत्सुः ।**
**ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः ॥ ५३ ॥**

इतीति ॥ स पत्री हंसः, इतीरयित्वा राजपुत्र्याः भैम्याः, हृदयं बुभुत्सुः जिज्ञासुः, विरराम तूष्णींबभूव । "व्याङ्परिभ्यो रमः" इति रमेः परस्मैपदम् । तथाहि, सन्तः कार्यज्ञाः गभीरे अगाधे, ह्रदे, हृदि परहृदये च, अवगाढे, प्रविश्य दृष्टे सति, कार्यस्य स्नानादेः रहस्योक्तेश्च अवतरं तीर्थं प्रस्तावञ्च, शंसन्ति कथयन्ति । अन्यथा, अनर्थः स्यादिति भावः । अवतरो व्याख्यातः । अर्थान्तरन्यासः ॥ ५३ ॥

**किञ्चित्तिरश्चीनविलोलमौलिर्विचिन्त्य वाचं मनसा मुहूर्तम् ।**
**पतत्रिणं सा पृथिवीन्द्रपुत्री जगाद वक्त्रेण तृणीकृतेन्दुः ॥ ५४ ॥**

किञ्चिदिति ॥ किञ्चित्तिरश्चीना स्वभावादीषत्साचीभूता. विलोला आयासाद्विलुलिता मौलिः, केशबन्धो यस्याः सा । 'मौलयः संयताः कचाः, इत्यमरः । वक्त्रेण तृणीकृतेन्दुः अधरीकृतचन्द्रा, सा पृथिवीन्द्रपुत्री भैमी, मुहूर्तमल्पकालं मनसा विचिन्त्य पतत्रिणं, वाचं जगाद ॥ ५४ ॥

**धिक्चापले वत्सिमवत्सलत्वं यत्प्रेरणादुत्तरलीभवन्त्या ॥**
**समीरसङ्गादिव नीरभङ्ग्या मया तटस्थस्त्वमुपद्रुतोऽसि ॥ ५५ ॥**

धिगिति ॥ चापले चपलकर्मणि, युवादित्वादण्प्रत्ययः । वत्सस्य भावः वत्सिमा शिशुत्वम् । पृथ्वादित्वादिमनिच्प्रत्ययः । तेन निमित्तेन वत्सलत्वं वात्सल्यं, बाल्यप्रयुक्तचापलासक्तिमित्यर्थः । तद्धिक्, कुतः यस्य चापलवात्सल्यस्य, प्रेरणादुत्तरलीभवन्त्या चपलायमानया, मया, समीरसङ्गाद्वाताहतेः उत्तरलीभवन्त्या नीरभङ्गया जलवीच्येव, तटस्थः उदासीनः, कूलगतश्च । त्वमुपद्रुतोऽसि पीडितोऽसि । अतोऽनर्थहेतुत्वात् बालचापलं हेयमिति भावः ॥ ५५ ॥

आदर्शतां स्वच्छतया प्रयासि सतां स तावत्खलु दर्शनीयः ।
आगः पुरस्कुर्वति सागसं मां यस्यात्मनीदं प्रतिबिम्बितं ते ॥५६

आदर्शतामिति ॥ स्वच्छतया, नैर्मल्यगुणेन, आदृश्यते पुरोगतवस्तुरूपमस्मिन्नित्यादर्शो दर्पणः, तत्तां प्रयासि । कुतः, यस्य स्वच्छस्य, ते तव सम्बन्धिनि, सागसं सापराधाम् , मां पुरस्कुर्वति पूजयति अग्रे कुर्वाणे च । आत्मनि बुद्धौ स्वरूपे च 'पुरस्कृतः पूजिते स्यादभियुक्तेऽग्रतः कृते । आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च, इति चामरः । इदं मदीयं, आगोऽपराधः, प्रतिबिम्बितं, 'मयास्मि तन्वि श्रमितातिवेलम्' इत्येवंरूपेण प्रतिफलितम् । मदीयमागस्त्वय्यारोपितवानस्मीत्यर्थः । पुरोवर्तिधर्माणामात्मनि, संक्रमणादादर्शोऽसीति भावः । ततः किमित्यत आह—स आदर्शः, सतां साधूनां तावत् प्रथमम्, दर्शनीयः खलु । अथ पूज्यश्चेति तावच्छब्दार्थः । 'रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणीन् । गुरुमग्निं तथा सूर्यं प्रातः पश्येत्सदा बुधः' इति शास्त्रादिति भावः ॥ ५६ ॥

अनार्यमप्याचरितं कुमार्या भवान्मम क्षाम्यतु सौम्य तावत् ।
हंसोऽपि देवांशतयासि वन्द्यः श्रीवत्सलक्ष्मेव हि मत्स्यमूर्तिः ॥

अनार्यमिति ॥ हे सौम्य साधो, भवान् कुमार्याः शिशोः मम सम्बन्धि अनार्यमनुचितमपि आचरितं त्वदुपद्रवरूपं दुश्चेष्टितम् । क्षाम्यतु सहताम् । हंसोऽपि तिर्यगपीत्यर्थः त्वमिति शेषः । भवानित्यनुषङ्गेत्वसीति मध्यमपुरुषायोगात् । देवांशतया मत्स्यमूर्तिः श्रीवत्सलक्ष्मा विष्णुरिव वन्द्योऽसि ॥

मत्प्रीतिमाधित्ससि कां त्वदीक्षामुदं मदक्ष्णोरपि यातिशेताम् ।
निजामृतैर्लोचनसेचनाद्वा पृथक्किमिन्दुस्सृजति प्रजानाम् ॥५८॥

अथ यदुक्तं, "त्वदीप्सितं किं विदधे अभिधेहि" इति तस्योत्तरमाह—मत्प्रीतिमिति ॥ कां मत्प्रीतिं किं वा मदीप्सितमित्यर्थः । आधित्ससि आधातुं कर्तुमिच्छसि । आदधातेः सन्नन्ताल्लटि सिप् । या प्रीतिः मदक्ष्णोः त्वदीक्षामुदं त्वदीक्षणप्रीतिम्,अतिशेतामतिलङ्घताम् । त्वद्दर्शनोत्सवादन्यात्कि ममेप्सितमित्यर्थः । तथा हि इन्दुः प्रजानां निजामृतैः लोचनसेचनात् नेत्राप्लवनात् पृथगन्यत् । 'पृथग्विना' इत्यादिना पञ्चमी । किं वा सृजति करोति । न किञ्चित्करोतीत्यर्थः । दृष्टान्तालङ्कारः ॥ ५८ ॥

मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदभिज्ञा ॥ ५९ ॥

अथ सर्वथा मनोरथः कथनीय इत्यभिप्रेत्य, तन्न शक्यमित्याह—मनस्त्विति ॥ मनो मच्चित्तं ( कर्तृ ) यं मनोरथं जातु कदापि नोज्झति न जहाति । स मनोरथः कण्ठपदं वाग्विषयं उपकण्ठदेशञ्च कथं यातु । सम्भावनायां लोट् । यानसम्भावनापि नास्तीत्यर्थः केनापि प्रतिबद्धस्य रथस्य कथमन्तिके सञ्चार इति भावः । कुतः अभिज्ञा विवेकिनी, का बाला स्त्री द्विजराजस्येन्दोः पाणिना, ग्रहे ग्रहणे, अभिलाषं कथयेत् । तथा हे द्विज पक्षिन् राजपाणिग्रहाभिलाषं नलपाणिग्रहेच्छामिति च गम्यते । तथा च दुर्लभजनप्रार्थना द्विजराजपाणिग्रहणकल्पा परिहासास्पदीभूता कथं लज्जावत्यया वक्तुं शक्यत इत्यर्थः ॥ ५९ ॥

वाचं तदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः ।
तत्याज तोषं परपुष्टघोषे घृणाञ्च वीणाक्वणिते वितेने ॥ ६० ॥

वाचमिति ॥ स हंसः, मृद्वीकया द्राक्षया । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । तुल्यरसां समस्वादां, मधुरार्थामित्यर्थः । मृद्वीं मधुराक्षरां, तदीयां वाचं परिपीय अत्यादरेणाकर्ण्य, परपुष्टघोषे कोकिलकूजिते तोषं प्रीतिं

तत्याज । वीणाक्वणिते च घृणां जुगुप्सां वितेने । 'घृणा जुगुप्सा कृपयोः' इति विश्वः ॥ ६० ॥

**मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा तस्यां समाकुञ्चितवाचि हंसः ।**
**तच्छंसिते किञ्चन संशयालुर्गिरा मुखाम्भोजमयं युयोज ॥६१॥**

मन्दाक्षेति ॥ तस्यां भैम्यां, मन्दाक्षेण ह्रिया, मन्दा सन्दिग्धार्था, अक्षरमुद्रा द्विजराजपाणिग्रहेत्यादिरक्षरविन्यासो यस्मिन् तत्तथा । उक्त्वा समाकुञ्चितवाचि निगमितवचनायां सत्याम्, अयं हंसः, तच्छंसिते भैमीभाषिते किञ्चन किञ्चित् संशयालुः सन्दिहानः सन् । "स्पृहिगृहि" इत्यादिसूत्रे शीङ्ग्रहणोपसङ्ख्यानादालुच्प्रत्ययः । मुखाम्भोजं मुखकमलं गिरा युयोज, मुखेन गिरमुवाचेत्यर्थः ॥ ६१ ॥

**करेण वाञ्छेव विधुं विधर्तुं यमित्थमात्थादरिणी तमर्थम् ।**
**पातुं श्रुतिभ्यामपि नाधिकुर्वे वर्णं श्रुतेर्वर्ण इवान्तिमः किम् ॥**

करेणेति ॥ हे भैमि करेण विधुं चन्द्रं विधर्तुं गृहीतुं, वाञ्छेव तत्कल्पं यमर्थम्, इत्थं द्विजराजपाणिग्रहेत्याद्युक्तप्रकारेण, आदरिणी आदरवती सती, आत्थ ब्रवीषि । "ब्रुवः पञ्चानाम्" इत्यादिना सिपस्थादेशः । ब्रुवश्चाहादेशः । "आहस्थ" इति हकारस्य थकारः । तमर्थं अन्ते भवोऽन्तिमः वर्णः शूद्रः । "अन्ताच्चेति वक्तव्यम्" इतीमनिच्प्रत्ययः श्रुतेर्वर्णं वेदाक्षरमिव श्रुतिभ्यां श्रोत्राभ्यां, पातुमपि श्रोतुमपीत्यर्थः नाधिकुर्वे किं नाधिकार्यस्मि किं, अस्म्येवेत्यर्थः । अतस्सोऽर्थो व्यक्तं वक्तव्य इति तात्पर्यम् ॥ ६२ ॥

**अर्थाप्यते वा किमियद्भवत्या चित्तैकपद्यामपि वर्त्तते यः ।**
**यत्रान्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥६३॥**

ननु तमर्थमत्यन्तदुर्लभत्वाद्वक्तुं जिह्मेमीत्याशङ्क्य आह अर्थाप्यत इति ॥ हे भैमि, भवत्या किं वा, इयदेतावद्यथा तथा अर्थाप्यते । किमर्थमयमर्थो द्विजराजपाणिग्रहणवदतिदुर्लभत्वेनाख्यायत इत्यर्थः । अर्थशब्दात्तदाचष्ट इत्यर्थे णिचि अर्थवेदसत्यानामापुग्वक्तव्य इत्यापुगागमः । कुतस्तथा

नाख्येय इत्याह—योऽर्थः, एकः पादो यस्यामित्येकपदी, एकपादसञ्चारयोग्यो मार्गः । 'वर्तन्येकपदी' इति चेत्यमरः । "कुम्भपदादिषु च" इति निपातनात्साधुः । चित्तैकपद्यां मनोमार्गेऽपि वर्तते । चक्षुराद्यविषयत्वेऽपीत्यपिशब्दार्थः । स कथं दुर्लभ इति भावः । तथा हि यत्र यस्मिन् ब्रह्मणि विषये चेतसोऽप्यन्धकारः प्रतिबन्धः किल, तद्ब्रह्मापि जिह्मेतरैरकुटिलैः, कुशलधीभिरिति यावत् । अवाप्यं सुप्राप्यम् । अमनोगम्यं ब्रह्मापि कैश्चिद्गम्यते, किमुत मनोगतोऽयमर्थ इत्यर्थः । अत एव अर्थापत्तिरलङ्कारः ॥

**ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोकेशयलोकमध्ये ।**
**तिर्यञ्चमप्यञ्च मृषानभिज्ञरसज्ञतोपज्ञसमज्ञमज्ञम् ॥ ६४ ॥**

अथ मयि मृषावादित्वशङ्कया वक्तुं सङ्कोचस्त्वया न शङ्कितव्यमिति त्रयेणाह—ईशेत्यादि ॥ ईशस्य यदणिमैश्वर्यं, तस्य विवर्तो रूपान्तरं मध्यो यस्याः सा तथोक्ते । हे कृशोदरीत्यर्थः । लोकेशलोके शेरत इति लोकेशलोकेशयाः ब्रह्मलोकवासिनः । अधिकरणे शेत इत्यच्प्रत्ययः । शयवासवासिष्वकालाद् इत्यलुक् । तेषां लोकानां जनानां मध्ये अञ्ज मूर्ध, तिर्यञ्चं पक्षिणमपि मां, मृषा अनृतं तस्यानभिज्ञा रसज्ञा रसना यस्य तस्य भावस्तत्ता सत्यवादितेत्यर्थः । उपजायत इत्युपज्ञा, आदौ ज्ञाता । उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः "आतश्चोपसर्गे" इत्यङ्प्रत्ययः । बहुलग्रहणात्कर्मार्थत्वम् । तथात्वेनोपज्ञा तदुपज्ञं' उपज्ञोपक्रमं तदाद्याचिख्यासायाम् इति नपुंसकत्वम्, समं साधारणम् । समैस्सर्वैर्वा ज्ञायत इति समज्ञा कीर्तिः पूर्ववदङ्प्रत्ययः । तदुपज्ञं तथात्वेनादौ ज्ञाता समज्ञा येन तं, तथोक्तं, तं सत्यवादिनं, अञ्ज विद्धीत्यर्थः अञ्जतेर्गत्यर्थत्वात् ज्ञानार्थत्वम् ॥ ६४ ॥

**मध्ये श्रुतीनां प्रतिवेशिनीनां सरस्वती वासवती मुखे नः ।**
**ह्रियेव ताभ्यश्चलतीयमद्धापथान्न संसर्गगुणेन बद्धा ॥ ६५ ॥**

मध्य इति ॥ किञ्च, प्रतिवेशिनीनां प्रतिवेश्यानां, श्रुतीनां ब्रह्ममुखस्थानां, मध्ये वासवती निवसन्ती, इयं नोऽस्माकं मुखे, सरस्वती वाक्,

संसर्ग एव गुणः श्लाघ्यधर्मः तन्तुश्च तेन बद्धा सती ताभ्यः श्रुतिभ्यः । ह्रियेवेत्युत्प्रेक्षा । अद्धापथात्सत्यमार्गात्, न चलति । संसर्गजा दोषगुणा भवन्तीति भावः । 'सत्येत्वद्धाञ्जसा द्वयम्' इत्यमरः ॥ ६५ ॥

**पर्यङ्कतापन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम् ।**
**कुत्रापि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालु ॥ ६६ ॥**

ततः किमत आह पर्यङ्केति ॥ कुत्रापि वस्तुनि द्वीपान्तरस्थेऽपीति भावः । अभिलाषि साभिलाषं, ते तव, चित्तं ( कर्तृ ), पर्यङ्कतामवसक्थिकात्वं, आपन्नः सरस्वान् सागरः अङ्कः चिह्नं यस्यास्तामतिदुर्गमामित्यर्थः । तां लङ्कापुरीमपि, प्रयाति चेत् । तदपि दुर्गस्थमपि वस्तु स्वशये स्वहस्ते, शयालु स्थितं, अवेहि । शयालुर्व्याख्यातः 'पर्यन्तामपि पर्यङ्क' इति वैजयन्ती ॥ ६६ ॥

**इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी ।**
**चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥**

इतीति ॥ तेन पत्ररथेन पक्षिणा हंसेन, इतीत्थं, ईरिता उक्ता, भैमी, ह्रीणा स्वयमेव स्वाकूतकथनसङ्कोचाल्लज्जिता च । "नुदविद" इत्यादिना विकल्पान्निष्ठानत्वम् । हृष्टा उपायलाभान्मुदिता च सती बभाण । किमिति मदीयं चेतो लङ्कां नायते नैति । अयतेर्लट् । अन्यत्र, कुत्रापि वस्तुनि साभिलाषं न । अतो वस्त्वन्तरनैस्पृह्यात् लङ्कां नायते । किंतु, नलं राजानं, कामयत इति श्लेषभङ्ग्या बभाणेत्यर्थः ॥ ६७ ॥

**विचिन्त्य बालाजनशीलशैलं लज्जानदीमज्जदनङ्गनागम् ।**
**आचष्ट विस्पष्टमभाषमाणामेनां स चक्राङ्गपतङ्गशक्रः ॥ ६८ ॥**

विचिन्त्येति ॥ विस्पष्टमभाषमाणां श्लेषोक्तिवशात्सन्दिग्धं भाषमाणामित्यर्थः । एनां दमयन्तीं, स चक्राङ्गपतङ्गशक्रः हंसपक्षिश्रेष्ठः, बालाजनस्य मुग्धाङ्गनाजनस्य, शीलशैलं, लज्जायामेव नद्यां मज्जन्ननङ्ग एव नागो गजो यस्य तं, विचिन्त्य विचार्य, आचष्ट । तस्या लज्जाविजितमन्मथत्वं दृष्ट्वा लज्जाविसर्जनार्थं वाचमुवाचेत्यर्थः ॥ ६८ ॥

**नृपेण पाणिग्रहणे स्पृहेति नलं मनः कामयते ममेति ।**
**आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थस्सुधिया मया किम् ॥**

नृपेणेति ॥ श्लेषकवेः श्लेषभङ्ग्या कवयित्र्याः श्लिष्टशब्दप्रयोक्त्र्या इत्यर्थः । 'कविर्वर्णन, इति धातोरौणादिक इकारप्रत्ययः । भवत्यास्तव सम्बन्धि नृपेण (कर्त्रा) पाणिग्रहणं पाणिपीडनं, उभयप्राप्तौ कर्मणि विवक्षितायाः षष्ठ्याः "कर्मणि च" इति निषेधेऽपि शेषे षष्ठीसमासः । तत्र स्पृहेति मम मनो नलं कामयत इति च । एवंरूपः श्लोकद्वयार्थः द्विजराज-पाणिग्रहेति चेतो नलं कामय इत्येतत् श्लोकद्वयार्थः । सुधिया विदुषा मया नाश्लेषि किं नाग्राहि किं गृहीत एवेत्यर्थः ॥ ६९ ॥

**त्वच्चेतसः स्थैर्यविपर्ययं तु सम्भाव्य भाव्यस्मि तदज्ञ एव ।**
**लक्ष्येहि बालाहृदि लोलशीले दरापराद्धेषुरपि स्मरस्स्यात् ॥७०॥**

तर्हि किमर्थं करेण वाञ्छेत्यादिकमज्ञवदुक्तमित्यत आह—त्वच्चेतस इति ॥ किंतु त्वच्चेतसः स्थैर्यविपर्ययमस्थिरत्वं सम्भाव्याशङ्क्य, तदज्ञः तस्य श्लोकद्वयार्थस्य अज्ञोऽनभिज्ञः, भावी भविष्यन् । "भविष्यति गम्यादयः" इति साधुः । अस्मि त्वच्चित्तस्थैर्यनिश्चयपर्यन्तमित्यर्थः । "धातुसम्बन्धे प्रत्ययाः" इति भविष्यत्तायागुणत्वाद्वर्तमानतानुरोधः । नन्वेवमनुरक्तायां मयि कुत इयं शङ्केत्याशङ्क्य स्त्रीणां चित्तचाञ्चल्य-सम्भवादित्याह—लक्ष्य इति ॥ लोलशीले चञ्चलस्वभावे, बालायाः हृदि चित्त एव, लक्ष्ये, स्मरोऽपि दरापराद्धेषुः ईषच्च्युतसायकस्स्यात्, कुशलोऽपि धन्वी चललक्ष्यात् कदाचिदपराध्यतीति भावः । 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः' इत्यमरः । अर्थान्तरन्यासोऽलङ्कारः ॥ ७० ॥

**महीमहेन्द्रः खलु नैषधेन्दुस्तद्बोधनीयः कथमित्थमेव ।**
**प्रयोजनं संशयकम्पमीदृक्पृथग्जनेनेव स मद्विधेन ॥ ७१ ॥**

महीति ॥ किञ्च, नैषधः इन्दुरिवेति नैषधेन्दुः नलचन्द्रः महीमहेन्द्रो भूदेवेन्द्रः, खलु । तत्तस्मात्, स नलः, पृथग्जनेन प्राकृतजनेनेव, मद्विधेन मादृशेन, विदुषा । ईदृक् संशयकम्पं सन्देहदुःस्थमास्थितं प्रयोजनम्,

इत्थमेव सन्दिग्धाकारेणैव, कथं बोधनीयः ज्ञापनीयः, अनर्ह इत्यर्थः । "गतिबुद्धि" इत्यादिना अणि कर्तुर्नलस्य कर्मत्वं ण्यन्ते कर्तुश्च कर्मण इत्यभिहितत्वं च ॥ ७१ ॥

पितुर्नियोगेन निजेच्छया वा युवानमन्यं यदि वा वृणीषे ।
त्वदर्थमर्थित्वकृतिप्रतीतिः कीदृङ्मयि स्यान्निषधेश्वरस्य ॥ ७२ ॥

अथेत्थमेव बोधने को दोषस्तत्राह—पितुरिति ॥ पितुर्नियोगेन आज्ञया निजेच्छया स्वेच्छया वा, अन्यं नलादन्यं युवानं यदि वा वृणीषे । तदा निषधेश्वरस्य नलस्य, मयि विषये, त्वदर्थं तुभ्यम् । "चतुर्थी तदर्थ" इत्यादिना चतुर्थीसमासः ॥ अर्थेन सह नित्यसमासः विशेष्यलिङ्गता च वक्तव्या । तद्यथा तथा, अर्थित्वकृतिः अर्थित्वभजनं, तत्र प्रतीतिर्विश्वासः, कीदृक् स्यात् नश्येदित्यर्थः । तस्मादसन्दिग्धं वाच्यमिति भावः ॥ ७२ ॥

त्वयापि किं शङ्कितविक्रियेऽस्मिन्नधिक्रियेऽहं विषये विधातुम् ।
इतः पृथक् प्रार्थयसे तु यद्यत्कुर्वे तदुर्वीपतिपुत्रि सर्वम् ॥ ७३ ॥

अथ तथा वक्तुं न शक्यते । तर्हि ततोऽन्यत्तवेप्सितं करिष्ये प्रतिज्ञाभङ्गपरिहारायेत्याह—त्वयेति ॥ हे उर्वीपतिपुत्रि भैमि, त्वयापि वा किं विधातुं किं कर्तुम्, शङ्कितविक्रिये सम्भावितविपर्यये, अस्मिन् विषये राजपाणिग्रहणसङ्घटनकार्ये, अहमधिक्रिये नियोज्ये, न नियोज्य इत्यर्थः । करोतेः कर्मणि लट् । किन्तु इतः पृथक् अस्मादन्यद् यद्यत् प्रार्थयसे तत्सर्वं कुर्वे करिष्यामीत्यर्थः । सामीप्ये लट् । कृतप्रायमित्यर्थः ॥ ७३ ॥

श्रवःप्रविष्टा इव तद्गिरस्ता विधूय वैमत्यधुतेन मूर्ध्ना ।
ऊचे ह्रिया विश्लथितानुरोधा पुनर्धरित्रीपुरुहूतपुत्री ॥ ७४ ॥

श्रव इति ॥ धरित्रीपुरुहूतपुत्री भूमीन्द्रसुता भैमी, श्रवःप्रविष्टाः, कर्णप्रविष्टा इव, न तु सम्यक्प्रविष्टाः, तद्गिरः हंसवाचः, वैमत्येन असम्मतया धुतेन कम्पितेन मूर्ध्ना, विधूय प्रतिषिध्य, ह्रिया (लज्जया) विश्लथितानुरोधा शिथिलितानुप्रवृत्तिः, त्यक्तलज्जा सती पुनरप्यूचे उवाच ॥ ७४ ॥

मदन्यदानं प्रति कल्पना या वेदस्त्वदीये हृदि तावदेषा ।
निशोऽपि सोमेतरकान्तशङ्कामोङ्कारमग्रेसरमस्य कुर्याः ॥७५ ॥

मदिति ॥ ममान्यस्मै दानं प्रति दानमुद्दिश्य, या कल्पना पितुर्नियोगेनेत्यादिश्लोकोक्तस्तर्कः । एषा कल्पना त्वदीये हृदि, वेदस्तावत सत्यैवेत्यर्थः । निशः निशाया अपि । "पद्दन्" इत्यादिना निशाया निश् । सोमाच्चन्द्रादितरकान्तशङ्कां पुरुषान्तरकल्पनामेव, ओंकारं प्रणवं, अस्य वेदस्य, अग्रेसरमाद्यं, कुर्याः । सर्वस्यापि वेदस्य प्रणवपूर्वकत्वादिति भावः । यथा निशायाः निशाकरेतरपरिग्रहो न शङ्कितव्यः । तथा ममापि नलेतरपरिग्रह इत्यर्थः । रूपकालङ्कारः ॥ ७५ ॥

सरोजिनीमानसरागवृत्तेरनर्कसम्पर्कमतर्कयित्वा ।
मदन्यपाणिग्रहशङ्कितेयमहो महीयस्तव साहसिक्यम् ॥ ७६ ॥

सरोजिनीति ॥ सरोजिन्याः पद्मिन्याः, मानसरागवृत्तेः मनोऽनुरागस्थितेः, अभ्यन्तरारुण्यप्रवृत्तेश्च, अनर्कसम्पर्कमर्केतरकान्तसङ्क्रान्तिं, अतर्कयित्वा अनूहित्वा, तव इयं ममान्यस्य नलेतरस्य पाणिग्रहं शङ्कत इति तच्छङ्की तस्य भावस्तत्ता । महीयः महत्तरं साहसिक्यं साहसिकत्वं, अहो असम्भावितार्थसम्भावनादाश्चर्यम् ॥ ७६ ॥

साधु त्वयातर्कि तदेकमेव स्वेनानलं यत्किल संश्रयिष्ये ।
विनामुना स्वात्मनि तु प्रहर्तुं मृषा गिरं त्वां नृपतौ न कर्तुम् ॥

साध्विति ॥ किञ्च, स्वेन स्वेच्छया, अनलं नलादन्यमग्निञ्च, संश्रयिष्ये प्राप्स्यामीति यत् त्वया अतर्कि ऊहितं तदेकमेव साध्वतर्कि । किंतु, अमुना नलेन विना, तदलाभ इत्यर्थः । स्वात्मनि प्रहर्तुं स्वात्मानं हिंसितुं, कर्मण्यधिकरणत्वविवक्षायां सप्तमी । "अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वथाभावात् क्वचित् किञ्चिद्विवक्ष्यत" इति वचनात् । अनलं संश्रयिष्य इत्यनुषङ्गः । नृपतौ नले विषये, त्वां मृषागिरं असत्यवाचं कर्तुं न । नल एव मे शरणं, अन्यथा मरणमेव शरणमिति भावः ॥ ७७ ॥

**मद्विप्रलम्भं पुनराह यस्त्वां तर्कस्स किं तत्फलवाचि मूकः ।**
**अशक्यशङ्कव्यभिचारहेतुर्वाणी न वेदा यदि सन्तु के तु ॥ ७८ ॥**

मदिति ॥ किञ्च, यस्तर्कः ऊहः, त्वां मद्विप्रलम्भ्यं मया विप्रलम्भनीयम् । "पोरदुपधात्" इति यत्प्रत्ययः । आह बोधयतीत्यर्थः । स तर्कः, तस्य विप्रलम्भस्य, फलवाचि प्रयोजनाभिधाने, मूकोऽशक्तः किम् अतो मय्यसत्यवादित्वशङ्का न कार्येत्यर्थः । कथमेतावता सत्यवाक्त्वनिश्चयोऽत आह—अशक्येति ॥ अशक्या शङ्का यस्य सोऽशक्यशङ्कः शङ्कितुमशक्यः, व्यभिचारहेतुः विप्रलीप्सालक्षणो यस्याः सा वाणी, न वेदा यदि न प्रमाणञ्चेत् । तर्हि के तु के वा वेदाः सन्तु न केऽपीत्यर्थः । सम्भावनायां लोट् । वेदवाचामसत्यत्वे मद्वाचामप्यसत्यत्वं नान्यथेति भावः ॥ ७८ ॥

**अनैषधायैव जुहोति किं मां तातः कृशानौ न शरीरशेषाम् ।**
**ईष्टे तनूजन्मतनोस्तथापि मत्प्राणनाथस्तु नलस्स एव ॥ ७९ ॥**

एवं निजेच्छया नलान्यवरणशङ्कां निरस्य पित्राज्ञयापि तां निरस्यति—अनैषधायेति ॥ तातो मज्जनकः । 'तातस्तु जनकः पिता' इत्यमरः । अनैषधायैव नलादन्यस्मा एव, जुहोति ददाति किम् । तत्र काकुः । तदा शरीरशेषां मृतां, तत्रापि कृशानौ न जुहोति किम् । न तु जीवन्तीं, नाप्यग्नेरन्यत्र जुहोतीत्यर्थः । तदङ्गीकर्तव्यमेवेति भावः । कुतः, स जनकः तनूजन्मतनोरात्मजशरीरस्य ईष्टे स्वामी भवतीत्यर्थः । "अधीगर्थदयेशां कर्मणि" इति कर्मणि शेषे षष्ठी । तथापि शरीरस्य पितृस्वामिकत्वेऽपीत्यर्थः । मत्प्राणनाथस्तु स नल एव, प्राणानामतज्जन्यत्वादिति भावः । अतो मय्यविश्वासं मा कुर्वित्यर्थः ॥ ७९ ॥

**तदेकदासीत्वपदादुदग्रे मदीप्सिते साधु विधित्सुता ते ।**
**अहेलिना किं नलिनी विधत्ते सुधाकरेणापि सुधाकरेण ॥ ८० ॥**

फलितमाह—तदेकेति ॥ तस्य नलस्य एकस्यैव दासीत्वं तदेव पदमधिकारः, तस्मादुदग्रे अधिके, मदीप्सिते पत्नीत्वरूपे विषये, ते तव,

विधित्सुता विचिकीर्षुतैव, साधु साध्वी, अविचारेण मन्मनोरथपूरणमेव ते युक्तमित्यर्थः । साध्विति सामान्योपक्रमान्नपुंसकत्वम् । 'शक्यं श्वमांसेनापि क्षुन्निवर्तयितुम्' इति भाष्यकारवचनात । ननु किमत्राभिनिवेशेन गुणवत्तरयुवान्तरस्वीकारे को दोषस्तत्राह—अहेलिनेति ॥ नलिनी सुधाकरेण अमृतनिधिनापि अहेलिना असूर्येण, सुधाकरेण चन्द्रेण किं विधत्ते, किं तेन तस्या इति भावः । तद्वन्ममापि युवान्तरेणेति भावः । दृष्टान्तालङ्कारः ॥ ८० ॥

**तदेकलुब्धे हृदि मेऽस्ति लब्धुं चिन्ता न चिन्तामणिमप्यनर्घम् ।**
**चित्ते ममैकस्सकलत्रिलोकीसारो निधिः पद्ममुखस्स एव ॥८१॥**

तदिति ॥ किञ्च, तस्मिन्नल एवैकस्मिन् लुब्धे लोलुपे, मे हृदि, अनर्घं चिन्तामणिमपि, लब्धुं चिन्ता विचारो नास्ति । तथा वित्ते धनविषयेऽपि, मम सकलत्रिलोकीसारः त्रैलोक्यश्रेष्ठः पद्ममुखः पद्माननः, स नल एव त्रैलोक्यसारः पद्ममुखो निधिश्च । नलादन्यत्र कुत्रापि मे स्पृहापि नास्ति । किमुत युवान्तर इति भावः ॥ ८१ ॥

**श्रुतश्च दृष्टश्च हरित्सु मोहाद्ध्यातश्च नीरन्ध्रितबुद्धिधारम् ।**
**ममाद्य तत्प्राप्तिरसुव्ययो वा हस्ते तवास्ते द्वयमेव शेषः ॥ ८२ ॥**

श्रुतश्चेति ॥ किं बहुना, स नलः, श्रुतः दूतद्विजवन्दिचारणादिमुखादाकर्णितः, मोहात् भ्रान्तिवशात्, हरित्सु दिक्षु, दृष्टः साक्षात्कृतश्च । तथा नीरन्ध्रितबुद्धिधारं निरन्तरीकृततदेकविषयबुद्धिप्रवाहं यथा तथा, ध्यातः चिन्तितश्च । तथाद्य मम तत्प्राप्तिः नलप्राप्तिः, असुव्ययः प्राणत्यागो वा, द्वयमेव द्वयोरन्यतरमेवेत्यर्थः शेषः कार्यशेषः । स च तव हस्ते आस्ते त्वदायत्तस्तिष्ठतीत्यर्थः । तत्र तत्वार्थश्रवणमनननिदिध्यासनसम्पन्नस्य ब्रह्मप्राप्तिदुःखोच्छेदलक्षणो मोक्षो गुर्वायत्त एवेत्यर्थान्तरप्रतीतेर्ध्वनिरेव । अभिधायाः प्रकृतार्थनियन्त्रणादिति सङ्क्षेपः ॥ ८२ ॥

**सञ्चीयतामाश्रुतपालनोत्थं मत्प्राणविश्राणनजं च पुण्यम् ।**
**निवार्यतामार्य वृथा विशङ्का भद्रेऽपि मुद्रेयमये भृशं का ॥८३॥**

सञ्चीयतामिति ॥ हे हंस, आश्रुतपालनोत्थं प्रतिज्ञातार्थनिर्वाहोत्पन्नम् । 'अङ्गीकृतमाश्रुतं प्रतिज्ञाम्' इत्यमरः । मत्प्राणानां विश्राणनं दानं तज्जञ्च पुण्यं सुकृतं, सञ्चीयतां सङ्गृह्यताम् । हे आर्य, वृथा विशङ्का सन्देहः, निवार्यतां त्यज्यताम् । अये अङ्ग, भद्रे पूर्वोक्तपुण्यरूपे श्रेयस्यपि विषये भृशं केयं मुद्रा औदासीन्यम् । श्रेयसि नोदासितव्यमित्यर्थः ॥८३॥

**अलं विलङ्घ्य प्रिय विज्ञ याञ्चां कृत्वापि वाम्यं विविधं विधेये।**
**यशःपथादाश्रवतापदोत्थात् खलु स्खलित्वास्तखलोक्तिखेलात् ॥**

अलमिति ॥ हे प्रिय प्रीतिकर, विज्ञ विशेषज्ञ, उभयत्र "इगुपध" इत्यादिना कप्रत्ययः । याञ्चां प्रार्थनां, विलंघ्यालं याञ्चाभङ्गो न कार्य इत्यर्थः । विधेये विनीतजने, विविधं वाम्यं वक्रत्वं कृत्वाप्यलम् । तच्च न कार्यमित्यर्थः । आश्रवो यथोक्तकारी । 'वचने स्थित आश्रव' इत्यमरः । तस्य भावस्तत्ता । सैव पदं पदक्षेपः, तदुत्थात् अस्तखलोक्तिखेलात् अस्ता निरस्ता खलोक्तिखेला मिथ्यालापविनोदो येन तस्मात्, यशःपथात्, स्खलित्वा चलित्वा खलु । न स्खलितव्यमित्यर्थः । अन्यथा यशोहानिस्स्यादिति भावः । 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः । 'अलं खल्वोः प्रतिषेधयोः' इत्यादिनोभयत्रापि क्त्वाप्रत्ययः । इह "न पादादौ खल्वादयः" इति निषेधस्योद्वेजकाभिप्रायत्वान्नञर्थस्य खलुशब्दस्यानुद्वेजकत्वान्नञ्त्वादेव पादादौ प्रयोगो न दूष्यत इत्यनुसन्धेयम् ॥ ८४ ॥

**स्वजीवमप्यार्तमुदे ददद्भ्यस्तव त्रपा नेदृशबद्धमुष्टेः ।**
**मह्यं मदीयान्यदसूनदित्सोर्धर्मः कराद् भ्रश्यति कीर्तिधौतः ॥८५॥**

स्वेति ॥ हे हंस, ईदृशबद्धमुष्टेः ईदृशकष्टलुब्धस्य, तव आर्तानां मुदे प्रीत्यै, स्वजीवं ददद्भ्यः स्वप्राणव्ययेनापि परप्राणत्राणं कुर्वद्भ्यो जीमूतवाहनादिभ्य इत्यर्थः । 'जीवं जीमूतवाहन' इति प्रसिद्धिः । त्रपा नेति काकुः । त्रपायाः मनःप्रत्यावृत्तिरूपत्वात्तदपेक्षया तेषामपादानत्वात पञ्चमी । यद्यस्मात् मदीयानेव असून् प्राणान् मह्यमदित्सोः तव, कीर्त्या धौतः शुद्धः, धर्मः कराद्धस्तात्, भ्रश्यति । न चैतत्त्वार्हमिति भावः ॥८५॥

दत्वात्मजीवं त्वयि जीवदेऽपि शुध्यामि जीवाधिकदे तु केन ।
विधेहि तन्मां त्वदृणेष्वशोद्धुममुद्रदारिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥

दत्वेति ॥ किञ्च, जीवदे प्राणप्रदे, त्वयि विषये, आत्मजीवं मत्प्राणं, दत्वापि, शुद्धयामि आनृण्यं गमिष्यामीत्यर्थः । किंतु, जीवादधिकः प्रियः तद्दे त्वयि केन शुद्धयामि न केनापि तत्तुल्यवस्त्वभावादिति भावः । सन्ति प्राणाः प्राणैस्समाः, प्राणाधिकस्समन्तु न किञ्चिदिति भावः । तत्तस्मात्तद-भावादेव । मां त्वदृणेषु विषये अशोद्धुमृणग्रस्ता भवितुमेव । अमुद्रे अपरि-मिते, दारिद्र्यं त्वद्देयवस्त्वभावः तस्मिन्नेव समुद्रे मग्नां विधेहि । नलसंघट-नेन मामृणग्रस्तां कुर्वित्यर्थः । अशोद्धुं मग्नामिति मग्नत्वानुवादेन अशुद्धिर्वि-धीयते । दरिद्राणामृणविमुक्तिर्नास्तीति भावः ॥ ८६ ॥

क्रीणीष्व मज्जीवितमेव पण्यमन्यं न चेद्वस्तु तदस्तु पुण्यम् ।
जीवेशदातर्यदि ते न दातुं यशोऽपि तावत्प्रभवामि गातुम् ॥

क्रीणीष्वेति ॥ हे जीवेशदातः प्राणेश्वरप्रद, मज्जीवितमेव पण्यं क्रेयं वस्तु क्रीणीष्व, जीवितेशरूपमूल्यदानेन स्वीकुरुष्वेत्यर्थः । अन्यदेतन्मूल्या-नुरूपं वस्त्वन्तरं नास्ति चेत् । तर्हि, पुण्यं सुकृतं अस्तु । किञ्च, यदि ते तुभ्यं दातुं यत्किञ्चित् प्रदातुं न प्रभवामि न शक्नोमि । तावत्तर्हि, यशोऽपि कीर्तिं वा, गातुं प्रभवामि ख्यातिसुकृतार्थमेवोपकुरुष्वेत्यर्थः ॥ ८७ ॥

वराटिकोपक्रिययापि लभ्यान्नेभ्याः कृतज्ञानथवाद्रियन्ते ।
प्राणैः पणैः स्वं निपुणं फणन्तः क्रीणन्ति तानेव तु हन्त सन्तः ॥

अथ साधुस्वभावेनापि परोपकारं कुर्वित्याह—वराटिकेति ॥ अथवा वराटिकोपक्रियया कपर्दिकादानेनापि, लभ्यान् सुलभान् कृतज्ञान् तावतैव बहुमन्यमानानुपकारज्ञान्, इभ्याः धनिकाः । 'इभ्य आढ्यो धनी स्वामी' इत्यमरः, नाद्रियन्ते । धनलोभान्नोपकुर्वन्तीत्यर्थः । सन्तो विवेकिनस्तु स्वमात्मानं निपुणं फणन्तः व्यवहरन्तः । एते वयं त्वदधीना इति साधु वदन्त इत्यर्थः । तानेव कृतज्ञान् प्राणैरेव पणैर्मूल्यैः, क्रीणन्त्यात्मसात्कुर्वन्ति ।

किमुत धनैरिति भावः । अतस्त्वयापि सता कृतज्ञाहमुपकर्तव्येति भावः । हन्तेति हर्षे ॥ ८८ ॥

स भूभृदष्टावपि लोकपालास्तैर्मे तदेकाग्रधियः प्रसेदे ।
न हीतरस्माद्घटते यदेत्य स्वयं तदाप्तिप्रतिभूर्ममाभूः ॥ ८९ ॥

स इति ॥ किञ्च, स भूभृन्नलः, अष्टावपि लोकपालाः तदात्मक इत्यर्थः । "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मरणात् । अत एव तदेकाग्रधियः नलैकतानबुद्धेः मे मम तैर्लोकपालैः, प्रसेदे प्रसन्नम् । भावे लट् । देवता हि ध्यायतः प्रसीदन्तीति भावः । कुतः, इतरस्मात् प्रसादादन्यथेत्यर्थः । त्वं स्वयमेव, एत्यागत्य, मम तदाप्तिप्रतिभूः नलप्राप्तिलम्भकोऽभूरिति यत्, तन्न घटते हि । तत्प्रसादाभावे कुतो ममेदं श्रेय इति भावः ॥ ८९ ॥

अकाण्डमेवात्मभुवार्जितस्य भूत्वापि मूलं मयि वीरणस्य ।
भवान्न मे किं नलदत्वमेत्य कर्ता हृदश्चन्दनलेपकृत्यम् ॥ ९० ॥

अकाण्डमिति ॥ हे हंस, विः पक्षी । 'वि विष्किर पतत्रिणः' इत्यमरः । "रो रि" इति रेफलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घः । भवान् अकाण्डं अनवसर एव । अत्यन्तसंयोगे द्वितीया । आत्मभुवा कामेन, मयि विषये आर्जितस्य कृतस्य रणस्य गाढप्रहारलक्षणस्य, मूलं हंसानामुद्दीपकत्वेन निदानं भूत्वापि । अन्यत्र, काण्डः दण्डः तद्वर्जितमकाण्डं यथा तथा । आत्मभुवा ब्रह्मणा, आर्जितस्य सृष्टस्य, वीरणस्य तृणविशेषणस्य, मूलं मूलावयवको भूत्वा । अत एव नलदत्वं नैषधदातृत्वम् । अन्यत्र, उशीरत्वञ्च । एत्य, मे हृदः चन्दनलेपकृत्यं शैत्योत्पादनं, न कर्ता न करिष्यति किं करिष्यत्येव । परोपकारशीलत्वादिति भावः । काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु । स्याद्वीरणं वीरतृणं मूलेऽस्योशीरमस्त्रियाम् ॥ अभयं नलदं सेव्यम् ' इति चामरः । अत्र वीरणस्येति शब्दश्लेषः । तथा च नलदत्वमेत्येति प्रकृताप्रकृतयोरभेदाध्यवसायेन हंसे आरोप्यमाणोशीरत्वस्य प्रकृततादात्म्येन चन्दनकृत्यलक्षणप्रकृतकार्योपयोगात्परिणामालङ्कारः । 'आ-

रोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ' इति लक्षणात् । स चोक्तश्लेषप्रतीपोत्थापित इति सङ्करः ॥ ९० ॥

**अलं विलम्ब्य त्वरितुं हि वेला कार्ये किल स्थैर्यसहे विचारः ।**
**गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमार्तिः ॥ ९१ ॥**

अलमिति ॥ हे हंस, विलम्ब्यालं न विलम्बितव्यमित्यर्थः । अलं खल्वित्यादिना क्त्वाप्रत्यये ल्यबादेशः । त्वरितुं वेला हि त्वराकालः खल्वयमित्यर्थः । कालसमयवेलासु तुमुन् । कुतः स्थैर्यसहे विलम्बसहे, कार्ये विचारः विमर्शः । किलेति प्रसिद्धौ । अन्यथा, विपत्स्यत इति भावः । तथा हि तीक्ष्णा शीघ्रग्राहिणी, प्रतिभा प्रज्ञा गुरूपदेशमिव । आर्तिराधिः, जातु कदापि कालं न प्रतीक्षते कालक्षेपं न सहत इत्यर्थः । उपमार्थान्तरन्यासयोः संसृष्टिः ॥ ९१ ॥

**अभ्यर्थनीयस्स गतेन राजा त्वया न शुद्धान्तगतो मदर्थम् ।**
**प्रियास्यदाक्षिण्यबलात्कृतो हि तदोदयेदन्यवधूनिषेधः ॥ ९२ ॥**

अथानन्तरकृत्यं सविशेषमुपदिशति—अभ्यर्थनीय इत्यादिना श्लोकपञ्चकेन ॥ गतेन इतो यातेन त्वया स राजा नलः शुद्धान्तगतोऽन्तःपुरस्थः, मदर्थं मत्प्रयोजनं, नाभ्यर्थनीयः न याच्यः । दुहादित्वाद्विकर्मकत्वम् । अत एवाप्रधाने दुहादीनामपि राज्ञोऽभिहिते कर्मत्वम् । कुतः, हि यस्मात्, तदा तस्मिन्काले, प्रियाणामास्यदाक्षिण्यं मुखावलोकनोत्थतच्छन्दानुवृत्तिबुद्धिरित्यर्थः । तेन बलात्कृतः बलात्प्रवृत्तः, अन्यवधूनिषेधः उदयेदुत्पद्येत ॥ ९२ ॥

**शुद्धान्तसंभोगनितान्ततृप्ते न नैषधे कार्यमिदं निगाद्यम् ।**
**अपां हि तृप्ताय न वारिधारा स्वादुस्सुगन्धिः स्वदते तुषारा ॥**

शुद्धान्तेति ॥ किञ्च, शुद्धान्तसम्भोगेन, अन्तःपुरस्त्रीसम्भोगेन, नितान्ततृप्ते अत्यन्ततुष्टे, नैषधे नले विषये, इदं कार्यं न निगाद्यं न निगदितव्यम् । ऋहलोर्ण्यत् । गदमदेत्यादिना सोपसर्गाद्यतो निषेधात् । तथा हि अपां तृप्ताय, अद्भिस्तृप्तायेत्यर्थः । " पूरणगुण " इत्यादिना षष्ठीसमास-

प्रतिषेधादेव ज्ञापकात् षष्ठी । "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वाच्चतुर्थी । स्वादुर्मधुरा, सुगन्धिः कर्पूरादिवासनया, शोभनगन्धा । अत्र कवीनां निरंकुशत्वाद्गन्धस्येत्वे तदेकान्तनियमानादरः । तुषारा शीतला वारिधारा, न स्वदते न रोचते हि । दृष्टान्तालङ्कारः ॥ ९३ ॥

विज्ञापनीया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस ॥ ९४ ॥

विज्ञापनीया इति ॥ हे हंसकुलावतंस, नैषधस्य नलस्य, हृदि हृदये, क्रुधा क्रोधेन, कदुष्णे ईषदुष्णे सति । "कवं चोष्ण" इति चकारात्कोः कदादेशः । मह्यमिमा मदर्थाः । अर्थेन सह नित्यसमासः विशेष्यलिङ्गता च वक्तव्या । गिरो वाचः, न विज्ञापनीयाः क्रोधावस्थायां न विज्ञाप्या इत्यर्थः । तथा हि पित्तेन पित्तदोषेण, दूने दूषिते, रसने रसनेन्द्रिये, सिता शर्करापि, तिक्तायते तिक्ता भवति । लोहितादित्वात् क्यष् । "वा क्यषः" इत्यात्मनेपदम् । अत्रापि दृष्टान्तालङ्कारः ॥ ९४ ॥

धरातुरासाहि मदर्थयाच्ञा कार्या न कार्यान्तरचुम्बिचित्ते ।
तदर्थितस्यानवबोधनिद्रा बिभर्त्यवज्ञाचरणस्य मुद्राम् ॥ ९५ ॥

धरेति ॥ तुरं त्वरितं, साहयत्यभिभवत्यरीनिति तुराषाडिन्द्रः, साहयतेश्चौरादिकत्वात् क्विप् । "नहिवृत्ति" इत्यादिना पूर्वपदस्य दीर्घः प्रतिकृतिकरणे व्यधिकरणस्यापि ग्रहणात् । मुग्धबोधस्तुराशब्दं डाबन्तमाह । तस्मिन् धरातुरासाहि भूमीन्द्रे नले, अजादिष्वसाड्रूपत्वात् 'सहेस्साडस्सः' इति षत्वं नास्ति । कार्यान्तरचुम्बिचित्ते अन्यकार्यव्यासक्तचित्ते सति मदर्थयाच्ञा मत्प्रयोजनप्रार्थना न कार्या तथा हि, तदान्यासङ्गकाले अर्थितस्य प्रार्थितार्थस्य अनवबोधो बोधाभावः, स एव निद्रा सा, अवज्ञाचरणस्यानादरस्य मुद्रामभिज्ञानं बिभर्ति । अनादरप्रतीतिं करोतीत्यर्थः । तच्चातिकष्टमिति भावः ९५ ॥

विज्ञेन विज्ञाप्यमिदं नरेन्द्रे तस्मात्त्वयास्मिन्समयं समीक्ष्य ।
आत्यन्तिकासिद्धिविलम्बसिध्योः कार्यस्य कार्यस्य शुभा विभाति ॥

विज्ञेनेति ॥ तस्मादुक्तकारणात्, विज्ञेन विवेकिना, त्वया समर्थं समीक्ष्य, इदं कार्यं अस्मिन्नरेन्द्रविषये, विज्ञाप्यम् । नन्वेवं कार्यविलम्बस्स्यादित्याशंक्य आह—आत्यन्तिकेति । हे हंस, कार्यस्य आत्यन्तिकासिद्धिविलम्बसिध्योर्मध्ये, आर्यस्य विदुषः ते तव, का कतरा, शुभा समीचीना, विभाति प्रतिभाति अनवसरविज्ञापनेन कार्यविघाताद्वरं विलम्बनेनापि कार्यसाधनमिति भावः ॥ ९६ ॥

**इत्युक्तवत्या यदलोपि लज्जा सा नौचिती चेतसि नश्चकास्तु ।**
**स्मरस्तु साक्षी तददोषतायामुन्माद्य यस्तत्तदवीवदत्ताम् ॥ ९७ ॥**

इतीति ॥ इतीत्थं, उक्तवत्या तया भैम्या, लज्जा अलोपि त्यक्तेति यत्, सा, विधेयप्राधान्यात् स्त्रीलिङ्गनिर्देशः । अनौचिती अनौचित्यं कर्थं नोऽस्माकं शृण्वतां चेतसि चकास्तु । किंतु, तस्य लज्जात्यागस्य अदोषतायाम्, स्मरस्साक्षी प्रमाणं, यः स्मरः, तां भैमीं, उन्माद्य उन्मादावस्थां प्रापय्य, तत्तदनुचितं अवीवदत् वादयति स्म । वदतेर्णौ चङ् । "गतिबुद्धि" इत्यादिना वदतेरणिकर्तुः कर्मत्वम् । प्रकृतिस्थस्य स्मरस्यायं दोषो न कामोपहतचेतस इति भावः ॥ ९७ ॥

**उन्मत्तमासाद्य हरः स्मरश्च द्वावप्यसीमां मुदमुद्वहेते ।**
**पूर्वस्स्मरस्पर्धितया प्रसूनं नूनं द्वितीयो विरहाधिदूनम् ॥ ९८ ॥**

ननु कामो वा किमर्थमेवं कारयतीत्याशङ्क्य, तस्यायं निसर्गो यदुन्मत्तेन क्रीडतीति सदृष्टान्तमाह—उन्मत्तमिति ॥ हरः स्मरश्च द्वावपि, उन्मत्तमासाद्य असीमामनन्तां, मुदमुद्वहेते । 'वहेः स्वरित' इत्यात्मनेपदम् । किंतु, तत्र निर्देशक्रमात्, पूर्वः पूर्वोक्तो हरः, स्मरस्पर्धितया, स्मरद्वेषितया प्रसूनं धत्तूरकुसुमं, तस्य तदायुधतयेति भावः । नूनं द्वितीयः स्मरस्तु विरहाधिदूनं विरहव्यथातप्तं उन्मादावस्थापन्नजनमित्यर्थः । तत्र विनोदलाभादिति भावः । 'उन्मत्त उन्मादवति धत्तूरमुचिकुन्दयोः' इति विश्वः । उभयोरप्यभेदाध्यवसायात्समानधर्मत्वम् । विशेषणमात्रश्लेषात् प्रकृताप्रकृतगोचरत्वाच्चोभयश्लेषः । तेन हरवत् स्मरोऽपि उन्मत्तप्रिय इत्युपमागम्यते ॥ ९८ ॥

तथाभिधात्रीमथ राजपुत्रीं निर्णीय तां नैषधबद्धरागाम् ।
अमोचि चञ्चूपुटमौनमुद्रा विहायसा तेन विहस्य भूयः॥ ९९ ॥

तथेति ॥ अथानन्तरं, तथा अभिधात्रीं वक्त्रीं, तां राजपुत्रीं, नैषधे नले, बद्धरागां निर्णीय । तेन विहायसा विहङ्गेन, विहस्य भूयः पुनः, चञ्चूपुटमौनमुद्रा निर्वचनत्वम् , अमोचि अवादीत्यर्थः ॥ ९९ ॥

इदं यदि क्ष्मापतिपुत्रि तत्वं पश्यामि तन्न स्वविधेयमस्मिन् ।
त्वामुच्चकैस्तापयता नलं च पञ्चेषुणैवाजनि योजनेयम् ॥१००॥

इदमिति ॥ हे क्ष्मापतिपुत्रि, इदं त्वदुक्तम् , तत्वं सत्यं, यदि तर्त्तर्हि, अस्मिन्विषये स्वविधेयं मत्कृत्यं न पश्यामि । किंतु, त्वां नृपञ्च उच्चकैरत्यन्तं तापयता पञ्चेषुणैव इयं योजना युवयोः संघटना, अजनि जनिता । जनेः कर्मणि चिण् । चिणो लुक् ॥ १०० ॥

त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासिव्रतिनां तपोभिः ।
त्वामद्य लब्ध्वामृततृप्तिभाजां स्वं देवभूयं चरितार्थमस्तु ॥१०१॥

त्वदिति ॥ किंतु, त्वद्बद्धबुद्धेस्त्वदासक्तचित्तस्य, त्वामेव ध्यायत इत्यर्थः । अत एव तस्य नलस्य, उपवासव्रतिनां त्वदासङ्गाद्विषयान्तरव्यावृत्तानां, तपोभिरुक्तोपवासव्रतरूपैः, अद्य त्वां लब्ध्वा मन्मुखेन लब्धप्रायां निश्चित्य साक्षात्कृत्येति च गम्यते । अत एवामृतेन या तृप्तिस्तद्भाजाम् , बहिरिन्द्रियाणां स्वं स्वकीयं, देवभूयं देवत्वमिन्द्रियत्वं सुरत्वञ्च । 'देवस्सुरे घने राज्ञि देवमाख्यातमिन्द्रियम्' इति विश्वः । चरितार्थं सफलम् अस्तु । अमृतपानैकफलत्वाद्देवत्वस्येति भावः । अर्थान्तरप्रतीतिर्ध्वनिरेवेत्यनुसन्धेयम् ॥ १०१ ॥

तुल्यावयोर्मूर्तिरभून्मदीया दग्धा परं सास्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देहतापं तस्याऽतनुस्त्वद्विरहाद्विधत्ते ॥१०२॥

यदुक्तं नृपञ्च पञ्चेषुस्तापयतीति तदाह—तुल्येति ॥ आवयोः नलस्य मम चेत्यर्थः "त्यदादीनि सर्वैर्नित्यम् ," इति सर्वग्रहणात्त्यदादीनां

नलेन सह समासे कृते त्यदादेरेकशेषः। मूर्तिस्तनुः, तुल्या तुल्यरूपा, अभूत्। अत्र मदीया सा मूर्तिः परं निश्शेषं, दग्धा भस्मीकृता। अस्य नलस्य, मूर्तिस्तु न ताप्यतेऽपि तापमपि न प्राप्यत इति हेतोः, अभ्यसूयन्निव ईर्ष्यन्निवेत्युत्प्रेक्षा। अतनुरनङ्गः, त्वद्विरहात् त्वद्विरहमेव रन्ध्रमन्विष्येत्यर्थः। तस्य नलस्य, देहतापं विधत्ते। तस्मात् सिद्धिपदमुपतिष्ठते ते मनोरथ इति भावः॥ १०२॥

**लिपिं दृशा भित्तिविभूषणं त्वां नृपः पिबन्नादरनिर्निमेषः।**
**चक्षुर्जलैरार्जितमात्मचक्षूरागं स धत्ते रचितं त्वया नु॥ १०३॥**

अथास्य दशावस्था वर्णयन् चक्षुःप्रीतिं तावत् श्लोकद्वयेनाह—**लिपिमिति**॥ हे भैमि, स नृपः भित्तिविभूषणं कुड्यालङ्कारभूताम्। लिपिं चित्रमयीं त्वाम्, आदरेणास्थया, निर्निमेषः दृशा पिबन्। चक्षुर्जलैर्निमेषत्वकृतैरश्रुभिः आर्जितं त्वया नु त्वया वा रचितम्। आत्मचक्षुषो रागमारुण्यमनुरागञ्च धत्ते। अत्रोभयकार्यसम्भवादुभयस्मिन्नपि रागे जाते श्लेषमहिम्ना एकत्रानभिमानात् कारणविशेषसन्देहः॥ १०३॥

**पातुर्दृशालेख्यमयीं नृपस्य त्वामादरादस्तनिमीलयास्ति।**
**ममेदमित्यश्रुणि नेत्रवृत्तेः प्रीतेर्निमेषच्छिदया विवादः॥ १०४॥**

इममेवार्थं भंग्यन्तरेणाह—**पातुरिति**॥ अस्तनिमीलया निर्निमेषया दृशा आलेख्यमयीं चित्रगतां त्वां, आदरात् पातुः द्रष्टुरित्यर्थः। पिबतेस्तृन्प्रत्ययः। अत एव "न लोक" इत्यादिना षष्ठीप्रतिषेधात् त्वामिति द्वितीया। नृपस्य नेत्रवृत्तेः नेत्रप्रवृत्तेः प्रीतेश्चक्षुःप्रीतेः, निमेषस्य छिदया विच्छेदेन सह नेत्रवृत्त्येति शेषः। भिदादित्वादङ्प्रत्ययः। अश्रुणि विषये इदमश्रु। ममेति मत्कृतं मत्कृतमिति विवादः कलहोऽस्ति भवतीत्यर्थः। अतिगाढा चक्षुःप्रीतिरित्यर्थः॥ १०४॥

**त्वं हृद्गता भैमि बहिर्गतापि प्राणायिता नासिकयास्य गत्या।**
**न चित्तमाक्रामति तत्र चित्रमेतन्मनो यद्भवदेकवृत्ति॥ १०५॥**

अथ मनस्सङ्गमाह—त्वमिति ॥ हे भैमि, त्वं बहिर्गतापि हृद्गता अन्तर्गता । 'अपिर्विरोधे' तस्याभासत्वाद्विरोधाभासोऽलङ्कारः । अस्य नलस्य, कया गत्या केन प्रकारेण, प्राणायिता प्राणवदाचरिता प्राणसमा, उपमानादाचारे कर्तुः क्यङ्प्रत्ययः । नासि अस्येवेत्यर्थः । अतः प्राणोऽपि नासिकया नासाद्वारा, आस्यगत्या मुखद्वारेणोच्छ्वासनिश्वासरूपेण, बहिर्गतोऽपि अन्तर्गतो भवतीति शब्दश्लेषः । अत एव प्राणायितेति श्लिष्टविशेषणेयमुपमा । पूर्वोक्तविरोधाभासेन सङ्कीर्णा । तत्र प्राणायितत्वे, चित्रं आश्चर्यरसः, चित्तं नाक्रामति न किञ्चिच्चित्रमित्यर्थः । कुतः यद्यस्मादेतन्मनो नलचित्तम्, भवती त्वमेवैका वृत्तिर्जीविका यस्य तद्भवदेकवृत्ति, भवच्छब्दस्य सर्वनामत्वाद्वृत्तिमात्रे पुंवद्भावः । जीवितप्राणायितत्वे किं चित्रम्, जीवितस्य प्राणधारणात्मकत्वादिति भावः ॥ १०५ ॥

**अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम् ।**
**श्वासान् स वर्षत्यधिकं पुनर्यद्ध्यानात्तव त्वन्मयतामवाप्य ॥१०६**

अथ द्वाभ्यां सङ्कल्पावस्थामाह—अजस्रमिति ॥ दूरदीर्घामत्यायतां, तदीयां नलीयां, सङ्कल्पा मनोरथा एव सोपानानि, तेषां ततिं पंक्तिं, अजस्रं त्वमारोहसि, श्वासान् पुनः स नलः, अधिकं वर्षति मुञ्चतीति यत्, तच्छ्वासवर्षणं, तव ध्यानात् त्वन्मयतां त्वदात्मकत्वं, अवाप्य प्राप्य, आप्नोतेराङ समासे क्त्वो ल्यबादेशः । नूनमिति शेषः । अन्यथा कथमन्यायासादस्य श्वासमोक्ष इति भावः । अत्र श्वाससोपानारोहणयोः कार्यकारणयोर्वैयधिकरण्योक्तेरसङ्गत्यलङ्कारः । "कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः" इति लक्षणात् । तन्मूला चेयं नलस्य दमयन्तीतादात्म्योत्प्रेक्षेति सङ्करः ॥ १०६ ॥

**हृत्तस्य यां मन्त्रयते रहस्त्वां तां व्यक्तमामन्त्रयते मुखं यत् ।**
**तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ॥१०७॥**

हृदिति ॥ तस्य नलस्य, हृत् हृदयं ( कर्तृ ), यां त्वां रहः उपांशु ।

'रहश्चोपांशु चालिङ्ग' इत्यमरः । मन्त्रयते सम्भाषते । तां त्वां, मुखं (कर्तृ) व्यक्तं प्रकाशं, आमन्त्रयते सम्भाषते । हे प्रिये, क्व यासि मामनुयान्तं पश्येत्येवमुच्चैरुच्चारयतीति यत् । सा तद्रहस्यप्रकाशनं, विधेयप्राधान्यात् स्त्रीलिङ्गता । तन्मुखस्य, तद्वैरिणो नलद्वेषिणः, पुष्पायुधस्य मित्रं सहचरश्चन्द्रः, तेन यत्सख्यं मैत्री सादृश्यं तस्यौचिती औचित्यं खलु । अरिमित्रमित्रस्याप्यरित्वादुचितमेतद्रहस्यभेदनमित्यर्थः । अत्र मुखकर्तृकरहस्योद्भेदनस्योक्तवैरनिमित्तकत्वमुत्प्रेक्ष्यते ॥ १०७ ॥

स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निमज्जयन्ती ।
आलिङ्ग्य या चुम्बति लोचने सा निद्राधुना न त्वदृतेऽङ्गना वा

अथैकेन जागरमरतिं चाह—स्थितस्येति ॥ रात्रौ शय्यामधिशय्य शय्यायां शयित्वा । "अधिशीङ्स्थासां कर्म" इत्यधिकरणस्य कर्मत्वम् । स्थितस्य नलस्य मनः, मोहे सुखपारवश्ये, निमज्जयन्ती सती, या आलिङ्ग्य, लोचने चुम्बति । सा निद्रा त्वदृते त्वत्तो विना "अन्याराद्दितरर्ते" इत्यादिना पञ्चमी । त्वद्विरहाद्धेतोः त्वदन्या चेति द्रष्टव्यम् । अङ्गना वा अधुना नास्ति । निद्रानिषेधाज्जागरः, अङ्गनान्तरनिषेधाद्विषयद्वेषलक्षणा अरतिश्चोक्ता । अत्र निद्राङ्गनयोः प्रस्तुतयोरेवालिङ्गनाक्षिचुम्बनादिधर्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता । "प्रस्तुताऽप्रस्तुतानाञ्च केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ।" इति लक्षणात् ॥ १०८ ॥

स्मरेण निस्तक्ष्य वृथैव बाणैर्लावण्यशेषां कृशतामनायि ।
अनङ्गतामप्ययमाप्यमानः स्पर्धां न सार्धं विजहाति तेन ॥१०९॥

अथ कार्श्यावस्थामाह—स्मरेणेति ॥ अयं नलः, स्मरेण बाणैः निस्तक्ष्य निशात्य, वृथैव लावण्यं कान्तिविशेषः, "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इति भूपालः । तदेव शेषो यस्यास्तां कृशतां कार्श्यं, अनायि नीतः । नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि लुङ् । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति

वचनात् । वृथात्वं व्यनक्ति । अनङ्गतां कृशाङ्गतां, अनुदरा कन्येतिवदीषदर्थे नञ्समासः । आप्यमानो नीयमानोऽपि पूर्ववदप्रधाने कर्मणि शानच्प्रत्ययः । तेन स्मरेण, सार्धं स्पर्धां न विजहाति, तथापि तं जिगीषत्येवेत्यर्थः । अङ्गकार्श्येऽपि स्पर्धा बीजस्य लावण्यस्याकार्श्यादङ्गकर्शनं वृथैवेति भावः । अत एव विशेषोक्तिरलङ्कारः । "तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते" इति लक्षणात् ॥ १०९ ॥

त्वत्प्रापकात्त्रस्यति नैनसोऽपि त्वय्येष दास्येऽपि न लज्जते यत् ।
स्मरेण बाणैरतितक्ष्य तीक्ष्णैर्लूनः स्वभावोऽपि कियान् किमस्य ॥

अथ द्वाभ्यां लज्जात्यागमाह—त्वदित्यदि ॥ स्मरेण तीक्ष्णैर्बाणैः, अतितक्ष्य । शरीरमिति शेषः । अस्य नलस्य, स्वभावोऽपि पापभीरुत्वनीचकृत्यगर्हताच्छील्यमपि, कियानल्पो लूनः किमित्युत्प्रेक्षा । कुतः, यद्यस्मात्, त्वत्प्रापकात्त्वत्प्राप्तिसाधनात् एनसः पापादपि, न त्रस्यति । "भीत्रार्थानां भयहेतुः" इत्यपादानत्वम् । एष नलः, त्वयि दास्येऽपि विषये न लज्जते ॥ ११० ॥

स्मारं ज्वरं घोरमपत्रपिष्णोस्सिद्धागदंकारचये चिकित्सौ ।
निदानमौनादविशद्विशाला साङ्क्रामिकी तस्य रुजेव लज्जा ॥

स्मारमिति ॥ घोरं दारुणं, स्मारं ज्वरं कामसन्तापं, चिकित्सौ प्रतिकर्तरि, 'कित निवास' इति धातोः, 'गुप्तिज्किद्भ्यस्सन्' निन्दाक्षमा व्याधिप्रतीकारेषु स्थाप्यत इति रोगप्रतीकारार्थे सन्प्रत्ययः । 'सनाशंसभिक्ष उः, न लोक' इत्यादिना षष्ठीप्रतिषेधः । सिद्धागदङ्कारचये सिद्धवैद्यसंघे । कर्मण्यच् । 'कारे सत्यागदस्य' इति मुमागमः । निदानमौनाद्रोगनिदानानभिधानाद्धेतोः, अपत्रपिष्णोः लज्जाशीलस्य । 'अलं कृञ्' इत्यादिना इष्णुच्प्रत्ययः । तस्य नलस्य, विशाला महती, लज्जा संक्रमादागता सांक्रामिकी, रुजेव । 'अक्षिरोगो ह्यपस्मारः क्षयः कुष्ठं मसूरिका । दर्शनात् स्पर्शनाद्दानात् संक्रामन्ति नरान्नरम्' इत्युक्तरोग

इवेत्यर्थः। भिदादित्वादङ्प्रत्ययः। अविशत्, अज्ञातनिदाना हि लज्जाभाजिनो भवन्तीत्यर्थः ॥ १११ ॥

**बिभेति रुष्टासि किलेत्यकस्मात्स त्वां किलोपेत्य हसत्यकाण्डे ।**
**यान्तीमिव त्वामनुयात्यहेतोरुक्तस्त्वयेव प्रतिवक्ति मोघम् ११२॥**

अथोन्मादावस्थामाह—बिभेतीति ॥ स नलः, अकस्मात् अकाण्डे रुष्टा कुपितासि, किलेति बिभेति। अकाण्डे अनवसरे, त्वामुपेत्य किल प्राप्येव, हसति। अहेतोरकस्माद्यान्तीमिव गच्छन्तीमिव, त्वामनुयाति त्वयोक्त इव मोघं निर्विषयं प्रतिवक्ति। सर्वोऽयमुन्मादानुभावः। उन्मादश्चित्तविभ्रमः ॥ ११२ ॥

**भवद्वियोगाभिदुरार्तिधारायमस्वसुर्मज्जति निश्शरण्यः ।**
**मूर्छामयद्वीपमहान्ध्यपङ्के हाहा महीभृद्भटकुञ्जरोऽयम् ॥ ११३ ॥**

अथ मूर्छावस्थामाह—भवदिति ॥ भवत्याः वियोगो भवद्वियोगः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। तस्मिन् अभिदुरा अविच्छिन्ना। विच्छित्तेः कुरच्। आर्तिधारा दुःखपरम्परा, तस्या एव यमस्वसुः यमुनायाः, मूर्छामयं मूर्छावस्थारूपं द्वीपम्, तत्र यन्महान्ध्यं महामोहः, तस्मिन्नेव पङ्के, अयं महीभृद्भटो राजवीरः, स एव कुञ्जरः, शरण्यः त्राणसमर्थः। 'तत्र साधुः' इति यत्प्रत्ययः। तद्रहितो निश्शरण्यः निरालम्बस्सन्, मज्जति। हाहेति खेदे। रूपकालङ्कारः। आर्तिधारायास्तमोविकारत्वेन रूपसाम्याद्यमुनारूपणम् ॥ ११३ ॥

**सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चेषुबाणैः पृथगर्जितासु ।**
**दशासु शेषा खलु तद्दशा या तया नभः पुष्प्यतु कोरकेण॥११४॥**

दशमावस्था तु तस्य कदापि सुगमा मा भूदित्याह—सव्येति ॥ सव्यापसव्याभ्यां वामदक्षिणाभ्यां, त्यजनान्मोचनात्, द्विरुक्तैः द्विगुणीकृतैः, दशभिरित्यर्थः। पञ्चेषुबाणैः पृथगर्जितासु प्रत्येकमुत्पादितासु, दशासु। "दृङ्मनःसङ्गसङ्कल्पो जागरः कृशताऽरतिः। ह्री त्यागोन्मादमूर्छान्ता इत्य-

नङ्गदशा दश" इत्युक्तासु चक्षुःप्रीत्यादिदशावस्थासु । शेषा अवशिष्टा या तद्दशा खलु तद्दशापि दशमावस्थेत्यर्थः । तयैव कोरकेण कलिकयेति रूपकम् । नभः पुष्प्यतु नभः पुष्पितमस्तु । सा दशा खपुष्पकल्पास्तु, कदापि मा भूदित्यर्थः । तच्च त्वत्प्राप्तिलाभादित्यर्थः पुष्प विकसन इति धातोः दैवादिकत्वाच्छ्यन् ॥ ११४ ॥

त्वयि स्मराधेस्सततास्मितेन प्रस्थापितो भूमिभृतास्मि तेन ।
आगत्य भूतस्सफलो भवत्या भावप्रतीत्या गुणलोभवत्याः ११५

किं बहुना—त्वयीति ॥ अहमपि, त्वयि विषये, स्मराधेः कामदुःखाद्धेतोः, सततमस्मितेन नित्यखिन्नेन, तेन भूमिभृता नलेन, प्रस्थापितोऽस्मि । अथागत्य, गुणलोभवत्याः भवत्यास्तत्र, भावप्रतीत्या अभिप्रायज्ञानेन, सफलोभूतः सिद्धार्थोऽस्मीत्यर्थः ॥ ११५ ॥

धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ११६

धन्यासीति ॥ हे वैदर्भि भैमि, वैदर्भी रीतिरपि गम्यते । धनं लब्धा धन्या कृतार्थासीत्यर्थः । 'धनगणं लब्धा' इति यत्प्रत्ययः । कुतः, यया त्वया उदारैरुत्कृष्टैः, गुणैः लावण्यादिभिः । अन्यत्र, कोपप्रसादादिभिः, पाशैश्चेति गम्यते । नैषधः नलोऽपि, तादृग्विधोऽपीत्यर्थः । समाकृष्यत सम्यगाकृष्टः, वशीकृत इत्यर्थः । एतेन वैदर्भीरीत्या श्लेषादिगुणैर्भावैः, कविरिवेत्युपमालङ्कारो व्यज्यते । तथा हि, चन्द्रिकायाः, अब्धिमपि अतिगम्भीरमपीत्यर्थः, उत्तरलीकरोति । क्षोभयतीति यत् । इतोऽधिका स्तुतिर्वर्णना । का खलु न कापीत्यर्थः । दृष्टान्तालङ्कारः । तेन नलस्य समुद्रगाम्भीर्यं दमयन्त्याश्चन्द्रिकासौन्दर्यञ्च व्यज्यते ॥ ११६ ॥

नलेन भायाश्शशिना निशेव त्वया स भायान्निशया शशीव ।
पुनःपुनस्तद्युगयुग्विधाता स्वभ्यासमास्ते नु युवां युयुक्षुः ॥११७॥

फलितमाह—नलेनेति ॥ शशिना निशेव त्वं नलेन भायाः भाहि ।

